KÂVYAMÂLÂ. 93.



# THE
# PÂNDAVACHARITA

BY

SHRI MALADHÂRI-DEVAPRABHASÛRI

EDITED BY

PAṆḌIT KEDÂRANÂTHA

AND

WÂSUDEVA LAXMAṆA SHÂSTRÎ PAṆASHÎKAR.



PUBLISHED BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR "NIRṆAYA-SÂGAR" PRESS, 23, KOLBHÂT LANE,

BOMBAY.



1911.



*Price* $4\frac{1}{4}$ *Rupees.*

काव्यमाला. ९३.

श्रीमलधारिदेवप्रभसूरिविरचितं

# पाण्डवचरितं महाकाव्यम् ।

जयपुरमहाराजाश्रितेन महामहोपाध्यायपण्डितदुर्गाप्रसादतनयेन पण्डितकेदारनाथेन, मुम्बापुरवासिपणशीकरोपाह्व-लक्ष्मणशर्मात्मजवासुदेवशर्मणा च संशोधितम् ।

मुंबय्यां
तुकाराम जावजी
इत्येतैः स्वीये निर्णयसागराख्ययन्त्रालये बा० रा० घाणेकरद्वारा मुद्रयित्वा प्रकाशितम् ।

शाकः १८३३, खिस्ताब्दः १९११.



मूल्यं ४। सपादरूप्यचतुष्कम् ।

# भूमिका ।



जैनकविः श्रीदेवप्रभसूरिः कदा समुत्पन्न इति समुपस्थिते विचारे श्रीधरकृताया न्यायकन्दल्या वृत्तिं रचितवता राजशेखरेण स्वग्रन्थे लिखिता एते श्लोका दृष्टिपथमागताः—

श्रीप्रश्नवाहनकुले कोटिकनामनि गणे जगद्वन्द्ये ।
श्रीमध्यमशाखायां वंशे श्रीस्थूलिभद्रमुनेः ॥ १ ॥
गच्छे हर्षपुरीये श्रीमज्जयसिंहसूरिवरशिष्यः ।
पष्ठाश्मीव्रततपाः षड्विकृतित्यागसाहसिकः ॥ २ ॥
... ... ... ... ... ... ...
... ... ... ... ... ... ...
तत्क्रमिको देवप्रभसूरिः किल पाण्डवायनचरित्रम् ।
श्रीधर्मसारशास्त्रं च निर्ममे सुकविकुलतिलकः ॥ १२ ॥

राजशेखरोऽयं कदासीदिति तु डेक्कनकालेजपुस्तकालये विद्यमानान्न्यायकन्दलीपुस्तकादेवं ज्ञायते यदय १४८० शकसंवत्सरात्पूर्वमेवासीदिति । यतस्तत्पुस्तकशकाङ्कोऽयं ( १४८०=A. D ) स्पष्टमेवोल्लिखितः । अतः शकादस्मात् पूर्वभवत्वं सिद्धमेवास्य पाण्डवचरितविधातुर्देवप्रभस्य । सोऽयं देवप्रभसूरिः कोटिकगणमध्यमशाखायां श्रीप्रश्नवाहनवंश्ये हर्षपुरीयगच्छे समासीदिति पाण्डवचरितस्यैवान्ते समासादितयानया प्रशस्त्या विद्मः—

श्रीकोटिकाख्यगणभूमिरुहस्य शाखा
या मध्यमेति विदिता विटपोपमाख्याः ।
श्रीप्रश्नवाहनकुले सुमनोऽभिरामः
ख्यातोऽस्ति स्वच्छ इव हर्षपुरीयगच्छः ॥
तत्राजनि श्रुतसुधाम्बुधिरिन्दुरोचिः-
स्पर्धिष्णुकीर्तिविभवोऽभयदेवसूरिः ।
शान्तात्मनोऽप्यहह निस्पृहचेतसोऽपि
यस्य क्रियाखिलजगज्जयिनी बभूव ॥
यद्वक्रीड इवावतीर्य परमज्योतिर्विवर्तः क्षितौ
तत्पट्टे वरचन्द्रमाः समजनि श्रीहेमसूरिप्रभुः ।

---

१. डाक्टर पीतरसनमहोदयस्य तृतीये रिपोर्टपुस्तके १३२ संख्याकमथ २७५ सङ्ख्याकं च पत्रमवलोकयम्.

चित्रं यद्वचनामृतानि नृपतिः श्रीसिद्धराजः पपौ
विश्वेषामपि लेभिरे तनुभृतामायूंषि वृद्धिं पुनः ॥
तस्य पदे मदनादिद्वेषिजयी विजयसिंहसूरिरभूत् ।
यद्वपुषि स्पर्धाभूल्लावण्यामृतशमामृतयोः ॥
श्रीचन्द्रसूरिरभवत्तदीयपदभूषणं गुणैकनिधिः ।
विद्यायाश्च मदस्य च येन वितेने चिरवियोगः ॥
धर्मज्ञानविवेकसंयमतपःसंकेतकेलीगृहं
स श्रीमान्मुनिचन्द्रसूरिरभवत्तत्पट्टभूषामणिः ।
ब्रूमस्तस्करपुष्करस्य महिमा किं नाम यत्सौरभै-
र्गण्यन्ते वत मादृशा अपि जनैः संख्यासु संख्यावताम् ॥
श्रीदेवप्रभसूरिर्बभूव तच्चरणकमलरोलम्बः ।
येन कलेः कीर्तिरवैरभितो मुखरीकृतं भवनम् ॥
मुनिचन्द्रसूरिपट्टे श्रीदेवानन्दसूरयोऽभूवन् ।
स्तोत्राय यद्गुणाना ध्रुवं न वेधा अपि सुमेधाः ॥
तेषा कल्पतरुस्त्रिविष्टपगवी चिन्ताश्मवैहासिका-
दादेशात्कविमार्गवल्गनकलानैपुण्यशून्यैरपि ।
श्रीदेवप्रभसूरिभिस्तनुभुवां पाण्डोश्चरित्रं किम-
प्येतत्तद्‌ (?) द्युधादिशिष्यहृदयोल्लासार्थमग्रन्थ्यत ॥
श्रीयशोभद्रसूरिणां तथात्र व्यापृता दृशः ।
यथैतदगमत्सर्वं विद्वल्लोकावलोक्यताम् ॥
ज्ञानैकमयमूर्तीनामस्मिन्नवरसान्विते ।
श्रीनरचन्द्रसूरीणां प्रज्ञया कतकायितम् ॥
श्रीत्यावलोकनेनैव कर्णक्रोडनवातिथेः ।
कर्तुमातिथ्यमर्हन्ति ग्रन्थस्यास्य मनीषिणः ॥

मङ्गलं महाश्रीः ॥

श्रीमदभयदेवसूरिः प्रथमो गुरुस्ततस्तता परम्परा प्रशस्तितः स्पष्टैव। श्रीदेवप्रभसूरि-णान्येऽपि रचिता ग्रन्था इति तत्कर्तृत्वेन प्रसिद्धान्मृगावतीचरितादवसीयते। पुस्तकस्यास्य मुद्रणे प्रतीकत्रयमस्माभिः समुपलब्धम्। एकमजयमेरुतोऽस्माकं सहृदयैः श्रीभवदत्तशास्त्रिभिः प्रेषितमन्यद्द्वयमपि पुण्यपत्तनस्थदक्षिणपाठशालापुस्तकालयतः श्री. के. बी. पाठकमहोदयैः सकृपं प्रेषितमासीदिति ताभ्यामर्पयन्तौ धन्यवादान् विरमावः

केदारनाथ-वासुदेवशर्माणौ ।

# श्रीदेवप्रभसूरिविरचितस्य पाण्डवचरितस्य सूचीपत्रम् ।







वधूनामवरोधत्वं कारागारं विदुर्बुधाः ।
आसामभाग्यभाजां हि राजा भवति नात्मजः ॥ १६७ ॥
तत्प्रसीद कलत्रार्थमन्यत्र व्यवसीयताम् ।
उदारास्त्वादृशां दाराः संपत्स्यन्ते पदे पदे ॥ १६८ ॥
अप्रार्थ्यप्रार्थनः सोऽथ बभार म्लानमाननम् ।
सकृदप्यपराधेषु धानुष्कः किं न दूयते ॥ १६९ ॥
दध्यौ नृपोऽभ्यधादेष नौपतिः सोपपत्तिकम् ।
नृपश्चेन्नास्य दौहित्रः किं जामात्रा मया फलम् ॥ १७० ॥
न चान्तरेण गाङ्गेयं धुर्यो राज्यस्य संभवी ।
न ह्याकाशप्रकाशाय प्रभुरन्यो विना रविम् ॥ १७१ ॥
दत्तेऽवश्यं न चान्यस्मै राज्यमूर्जस्वि शान्तनुः ।
सुधासर्वस्वमम्भोधिर्न्यधात्पुत्रे कलानिधौ ॥ १७२ ॥
इतः कर्षति चेतो मे नौतन्त्राधिपतेः सुता ।
संकटे पतितोऽमुष्मिन्मूढधीः करवाणि किम् ॥ १७३ ॥
इत्थं विकल्पैर्भूपालः काममाचान्तमानसः ।
मोघफाल इव द्वीपी निजं पुरमुपाययौ ॥ १७४ ॥
तदानीमागतो राजसेवावसरलालसः ।
निर्वर्ण्य तातवैवर्ण्यं चितां शान्तनवोऽभ्यधात् ॥ १७५ ॥
विनयातिक्रमः किं मे किमाज्ञालङ्घि केनचित् ।
किंवा सस्मार मे मातुर्यन्मे श्यामाननः पिता ॥ १७६ ॥
तस्मान्निःशेषमागम्य सोऽगमन्नौपतेर्गृहम् ।
विहितस्वागतश्चैनमवदन्नृपनन्दनः ॥ १७७ ॥
तातस्तावन्न पृष्टोऽपि यथावत्कथयिष्यति ।
अमात्यात्तातसध्रीचः सर्वं जानाम्यदः पुनः ॥ १७८ ॥
ततः सर्वात्मना यत्नात्करिष्ये पितुरीप्सितम् ।
इत्थं विमृश्य सोऽमात्यं पप्रच्छ विजने सुधीः ॥ १७९ ॥

महाभाग महाभाग्यैरथ शान्तनुराप्यते ।
इत्थं निराकृथा यत्तत्सुष्ठु नानुष्ठितं त्वया ॥ १८० ॥
अवदन्नौपतिः प्रीतः कुमार शृणु कारणम् ।
शान्तनोरपि येनासि प्रार्थनाभङ्गहेतवे ॥ १८१ ॥
सोऽन्धकूपे क्षिपेत्पुत्रीं ससापत्न्ये ददीत यः ।
वसन्त्याः शान्तनोर्गेहे सपत्नोऽस्यास्त्वमेव हि ॥ १८२ ॥
सपत्नीतोऽपि तज्जातं नितान्तमतिरिच्यते ।
कोशातक्या फलेष्वेव रसः परिसमाप्यते ॥ १८३ ॥
नररत्न सपत्नोऽसि येषां तेषां कुतः सुखम् ।
जाग्रत्यसहने सिंहे सुखायन्ते कियन्मृगाः ॥ १८४ ॥
अप्रसन्नः प्रसन्नो वा भवान्येषां द्वयेऽपि ते ।
आपदां पदमाद्याः स्युः संपदामपरे पुनः ॥ १८५ ॥
कुमार मम दौहित्रो यस्तु भावी कथंचन ।
दूरे महोदयस्तस्य समीपे विपदः पुनः ॥ १८६ ॥
त्वां समुत्सृज्य राज्यश्रीः श्रीमन्किं वृणुते परम् ।
हित्वा वार्धिं महासिन्धुः किं तल्लमुपसर्पति ॥ १८७ ॥
यः सर्वकमनीयायाः श्रूयते जनकः श्रियः ।
प्रजानुरागजलधिः सोऽपि त्वय्येव जृम्भते ॥ १८८ ॥
स्नेहतो दुहितुः पश्य नायतौ दुःखमायतम् ।
प्रणयातिक्रमं तेन कृतवानसि ते पितुः ॥ १८९ ॥
जगाद शान्तनोः सूनुर्मातामह महान्भ्रमः ।
तवैष यदिदं वाक्यं तुच्छोचितमुदाहरः ॥ १९० ॥
भिदेलिमा हि प्रकृतिः कुरुवंशान्यवंशयोः ।
भवेत्स्वभावो नह्येकः कलहंसबकोटयोः ॥ १९१ ॥
सापत्न्यमिति संबन्धो विवेकिनि कुरोः कुले ।
अभूतपूर्व एवायं नैव विज्ञायते क्वचित् ॥ १९२ ॥

मम सत्यवती माता गङ्गातोऽपि विशिष्यते ।
संबन्धो जन्मसंबन्धात्प्रतिपन्नो महान्ननु ॥ १९३ ॥
यस्तस्या भविता सूनुः स ममेवोपयाचितैः ।
शुभः स देशः कालो वा यत्र भ्रात्रा समागमः ॥ १९४ ॥
स्वादयिष्यति ते पुत्री पुत्रेण विहितं मया ।
सुखं विनयतः पूर्वं पश्चात्तु तनुजैः कृतम् ॥ १९५ ॥
दूयते किं च तातोऽपि मया भृशमबन्धुना ।
रथस्यैकरथाङ्गस्य प्रत्यूहो हि पदे पदे ॥ १९६ ॥
एकां शृणु प्रतिज्ञां मे बाहुमुत्क्षिप्य जल्पतः ।
सत्यवत्यास्तनूजस्य राज्यं नान्यस्य कस्यचित् ॥ १९७ ॥
अहं तु हन्तुमेतस्य प्रत्यूहव्यूहमन्वहम् ।
चापभृत्तां करिष्यामि सुतोऽस्मि यदि शान्तनोः ॥ १९८ ॥
अद्यैवास्तं मया राज्यं तुष्टाश्च मम देवताः ।
सत्यवत्या सधर्मिण्या यत्तातः सुमना भवेत् ॥ १९९ ॥
उदात्तामिति गाङ्गेयगिरमाकर्ण्य विस्मितैः ।
स्थिराणि खेचरैर्व्योम्नि विमानानि वितेनिरे ॥ २०० ॥
विस्मयात्फुल्लनयनस्ततः सत्यवतीपिता ।
अत्यन्तलुब्धो विश्रब्धं कुमारं पुनरभ्यधात् ॥ २०१ ॥
साधु साधु कुमारेन्द्र त्वमेव पितृवत्सलः ।
स्फीतं गुणगणक्रीतं यदेवं राज्यमुज्झसि ॥ २०२ ॥
राजपुत्रा हि राज्यार्थमकृत्यान्यपि कुर्वते ।
उदात्तं तत्क्रमायातं को नाम त्वमिव त्यजेत् ॥ २०३ ॥
परं कुमार ये केचिद्भवितारस्तवात्मजाः ।
न तेऽन्यस्य सहिष्यन्ते राज्यमूर्जितबाहवः ॥ २०४ ॥
त्वत्तो ये जन्म लप्स्यन्ते पवित्रक्षात्रतेजसः ।
कस्तान्विशिष्यते सोढुमन्यसिंहानिवाहवे ॥ २०५ ॥

राज्यमाच्छेत्तुमुत्सिक्तैः शक्तैस्ते तनुजन्मभिः ।
आत्तश्रीः पुनरश्रीको भविता मत्सुतासुतः ॥ २०६ ॥
इत्थं नानाधिवैधुर्यं भावि संभाव्य भूरिशः ।
सुतायामायतौ तात पुनः स्खलति मे मनः ॥ २०७ ॥
इत्युक्तवन्तं तं दूष्यन्नन्तः शान्तनवोऽभ्यधात् ।
एतामपि तवेदानीं चिन्तां व्यपनयाम्यहम् ॥ २०८ ॥
शृणु त्वं व्योम्नि शृण्वन्तु सिद्धगन्धर्वखेचराः ।
ममैकं मुषिताशेषपापग्रहमभिग्रहम् ॥ २०९ ॥
स्वर्गश्च सापवर्गश्च यस्य ख्याता फलद्वयी ।
आजन्ममन्मथोत्पातं ब्रह्मचर्यमतः परम् ॥ २१० ॥
माता मातामहस्तातो भाविनो बान्धवाश्च ये ।
एषामानन्दधुर्यस्य व्रतस्यास्य किमुच्यते ॥ २११ ॥
चारणश्रमणैः पूर्वमिति मे प्रतिपादितम् ।
प्रथमं च चतुर्थं च व्रतेष्वनुपमे व्रते ॥ २१२ ॥
प्रतिपेदे मया पूर्वं प्राणिनामभयव्रतम् ।
ब्रह्मव्रतमिदानीं तु मम भाग्यमहो महत् ॥ २१३ ॥
अस्तु त्रस्तविपद्व्रातं तार्तीयकमपि व्रतम् ।
पितृशुश्रूषणं नाम ममाजन्म निरत्ययम् ॥ २१४ ॥
इति प्रस्तुवतस्तस्य श्रद्धालोर्मूर्ध्नि बन्धुरम् ।
भृङ्गबद्धस्वनोत्कर्षं पुष्पवर्षं दिवोऽपतत् ॥ २१५ ॥
उच्चैरुरिति वाचश्च देवा धन्यासि जाह्नवि ।
त्वं चासि शान्तनो श्लाघ्यः सोऽयमीदृग्ययोः सुतः ॥ २१६ ॥
सर्वेऽपि ज्ञानिनो ब्रूत पृच्छामः खेचरा वयम् ।
यद्येतद्व्रतमारब्धं केनापि गृहमेधिना ॥ २१७ ॥
तत्त्वसत्त्वैकनिस्पन्दमयो यदयमाददे ।
ईदृग्ब्रह्मव्रतं भीष्मं भीष्मस्तेनैष गीयताम् ॥ २१८ ॥

सत्त्वं चेदेकमप्यस्ति किमन्यैर्बहुभिर्गुणैः।
तदेव हन्त चेन्नास्ति किमन्यैर्बहुभिर्गुणैः॥ २१९॥
अहिंसा ब्रह्मचर्यं च पितृभक्तिश्च निश्चला।
त्रयस्त्रिभुवने श्लाघ्याः शान्तनोस्तनुजे गुणाः॥ २२०॥
सर्वव्रतानां पारीणो मा सरीणः क्वचिद्भव।
इत्यभिष्टुत्य निश्छद्म सद्म स्वं खेचरा ययुः॥ २२१॥
ततो दुहितरं तूर्णमाहूयोत्सङ्गसङ्गिनीम्।
कुर्वन्नुदीरयामास कुमारं नाविकेश्वरः॥ २२२॥
गुणग्रामैकवास्तव्यो नास्त्येव त्वत्समः पुमान्।
पितुरर्थे कृतं सद्यो यद्ब्रह्मव्रतमद्भुतम्॥ २२३॥
तवानेन चरित्रेण चित्रीयितमनाश्चिरम्।
वृत्तान्तमेकमाख्यामि कुमार शृणु सांप्रतम्॥ २२४॥
कालिन्दीकूलपालीषु विहरन्नहमेकदा।
अशोकानोकहतले विश्रामाय समागमम्॥ २२५॥
तदा च जातां केनापि तत्र निस्त्रिंशचेतसा।
सश्रीकामुत्थितामेकामद्राक्षं मञ्जुबालिकाम्॥ २२६॥
अपत्यमनपत्योऽहं स्पृहयालुरहर्निशम्।
सुरूपां तामुपादातुं प्रवृत्तोऽस्मि सविस्मयः॥ २२७॥
विजातिर्वा सुजातिर्वा काप्यसाविति वेत्ति कः।
एवं विकल्प्य व्यावृत्य चलितोऽस्मि स्ववेश्मनि॥ २२८॥
अत्रान्तरेऽन्तरिक्षान्तरुल्ललास सरस्वती।
अस्ति **रत्नपुरे** स्वस्तिधाम्नि **रत्नाङ्गदो** नृपः॥ २२९॥
तस्य **रत्नवती** कुक्षिशुक्तिमुक्तेयमात्मजा।
खेचरेणापहृत्यात्र विमुक्ता पितृवैरिणा॥ २३०॥
तामेतामतनुप्रेमा **शान्तनुः** परिणेष्यति।
इति व्योमगिरा बालां ग्राहितस्तामहं तदा॥ २३१॥

तनयामनपत्यायाः प्रियायास्तामुपानयम् ।
नामधेयं व्यधां चास्याः सत्यं सत्यवतीत्यहम् ॥ २३२ ॥
मम पत्न्या च यत्नेन वात्सल्यजलकुल्यया ।
केलिकाननवल्लीवदियं वृद्धिमनीयत ॥ २३३ ॥
त्रिलोकीतिलकीभूता प्रभूतगुणमन्दिरम् ।
सेयं सत्यवती पुत्री कृत्रिमा मम नौरसी ॥ २३४ ॥
पिता भवत्यपत्यानामीदृशां मादृशा कुतः ।
आस्पदं कल्पवल्ल्या हि सुमेरुर्न पुनर्मरुः ॥ २३५ ॥
तदस्या दिव्यवाचैवं निर्णीतः शान्तनुः पतिः ।
वीक्षितुं पितृभक्तिं तु त्वदीयामित्यजल्पिषम् ॥ २३६ ॥
तदिदानीमुपादत्स्व मत्सुतां तातहेतवे ।
अतःपरं त्वमेवास्या विश्रामः सुखदुःखयोः ॥ २३७ ॥
इत्यालप्य कुमारस्य प्रसरत्पुलकाङ्कुरः ।
सुतां सत्यवतीं प्रीतामर्पयामास नौपतिः ॥ २३८ ॥
अलमम्ब विलम्बेन रथोऽयमधिरुह्यताम् ।
इति तां रथमारोप्य पुरं शान्तनवो ययौ ॥ २३९ ॥
नभश्चरेभ्यो निःशेषं वृत्तान्तं ज्ञानपूर्विणः ।
प्रसन्नस्य पितुर्नीत्वा स चक्रे तामुपायनम् ॥ २४० ॥
पितापि भीष्ममाश्लिष्य निर्भरस्नेहपूर्वकम् ।
आत्मैकवेद्यमानन्दममन्दं वरमन्वभूत् ॥ २४१ ॥
दृशा पीयूषवर्षिण्या श्रीविश्राममहीरुहम् ।
सिञ्चन्नुवाच गाङ्गेयमुत्सङ्गस्थापितं पिता ॥ २४२ ॥
शृण्वन्ति पितुरादेशं ये तेऽपि विरलाः सुताः ।
आदिष्टं ये तु कुर्वन्ति सन्ति ते यदि पञ्चषाः ॥ २४३ ॥
आत्मना यस्तु विज्ञाय करोति पितुरीप्सितम् ।
एक एव स मे सूनुर्जाह्नवीशुक्तिमौक्तिकम् ॥ २४४ ॥

ततः परं सहस्राणि वत्सराण्यायुरस्तु ते ।
एतस्य कुरुवंशस्य पताकाश्रियमाप्नुहि ॥ २४५ ॥
प्रमोदादेवमाशीर्भिरभिनन्द्य निजात्मजम् ।
नृपः सत्यवतीं सौम्ये मुहूर्ते पर्यणीयत ॥ २४६ ॥
ततः सत्यवतीं पत्नीं नवप्रेमां समीयुषः ।
भूपालस्य पुमर्थेषु कामः कामं प्रियोऽभवत् ॥ २४७ ॥
रतिपुत्रफला दारा इति नीतिवचस्तया ।
सत्यापयन्त्या सुषुवे पुत्रश्चित्राङ्गदाभिधः ॥ २४८ ॥
तेजस्वितिलकः पादैराक्रमन्भूभृतां शिरः ।
योऽभवज्जातमात्रोऽपि बालार्क इव दुःसहः ॥ २४९ ॥
विचित्रवीर्य इत्यासीत्सत्यवत्याः सुतोऽपरः ।
बभूव भूभृतो यस्माद्वंशः प्रांशुप्ररुत्वरः ॥ २५० ॥
तदा तयोः समग्रेषु हितकर्मसु जाग्रतः ।
प्रादुर्बभूव सौभ्रात्रं गङ्गासूनोरकृत्रिमम् ॥ २५१ ॥
सोऽग्रजन्मानुजन्मानौ कृत्वाङ्कतलतल्पगौ ।
उल्लापैः श्रोत्रपीयूषैः खेलयामास भूरिशः ॥ २५२ ॥
क्षत्रगोत्रोचितैस्तैस्तैरन्यबालविलक्षणैः ।
एतयोर्बाल्यचापल्यैः स तुतोष क्षणे क्षणे ॥ २५३ ॥
अथाल्पीयो विदित्वायुरग्रिमस्तत्त्वदृश्वनाम् ।
शुभध्यानेन तत्याज शान्तनुर्मानुषीं तनुम् ॥ २५४ ॥
विधिवद्विदधे भीष्मः पितुः स्वस्योर्ध्वदेहिकम् ।
इह च प्रेत्य च प्रीत्यै तादृशा हि सुताः पितुः ॥ २५५ ॥
सोऽथ चित्राङ्गदं राज्ये शिशुमेव न्यवीविशत् ।
न हि विस्मृतिमभ्येति प्रतिपन्नं महात्मनाम् ॥ २५६ ॥
स भीष्मेणेव भीष्मेण तथोग्रं धाम लम्भितः ।
उदयन्नपि दुष्प्रेक्ष्यो यथाभूद्भानुमानिव ॥ २५७ ॥

अभूत्कश्चित्स भूपानां हृदि चित्राङ्गदोऽगदः ।
नागदो नागदङ्कारः कोऽप्यासाद्य चिकित्सते ॥ २५८ ॥
तेन नैक्षित भीष्मोऽपि संविभागी जये परः ।
अतः स युद्धमेकाकी चक्रे सार्धं विरोधिभिः ॥ २५९ ॥
स निर्मलकलासद्मच्छद्मनाम्न्येत्य जग्रसे ।
नीलाङ्गदेन संग्रामे शीतांशुरिव राहुणा ॥ २६० ॥
शिरःशेषोऽपि चेद्वैरी तदा बाधेत राहुवत् ।
उपानीयत भीष्मेण सोऽप्यतो नामशेषताम् ॥ २६१ ॥
अथ राज्यं कनिष्ठाय गरिष्ठो जाह्नवीसुतः ।
ददौ विचित्रवीर्याय बन्धवे बन्धुवत्सलः ॥ २६२ ॥
तं भीष्मचापमाहात्म्यादपचक्रे न कश्चन ।
यूथनाथान्तिके केन कलभः परिभूयते ॥ २६३ ॥
चतसृष्वपि विद्यासु गन्ता विद्यासु कौशलम् ।
चक्रे कनीयसो भ्रातुर्भीष्मः सज्ये च धन्वनि ॥ २६४ ॥
अनहंयुतयात्यन्तं भूम्ना वैनयिकेन च ।
बबन्ध बान्धवस्नेहं भीष्मस्तस्मिन्विशेषतः ॥ २६५ ॥
दाराणामनुरूपाणां भ्रातुरुद्वाहहेतवे ।
गवेषणाय स प्रैषीन्निजान्प्रति दिशं नरान् ॥ २६६ ॥
मार्गदत्तदृशे तस्मै कदाचिद्धूलिधूसरः ।
तेषामेकतमोऽभ्येत्य कथयामासिवानिति ॥ २६७ ॥
देव श्रीकाशिराजोऽस्ति प्रकाशः काश्यपीतले ।
यस्य मन्दाकिनी नित्यमनर्घ्या गृहदीर्घिका ॥ २६८ ॥
अम्बिकाम्बालिकाम्बा च तिस्रस्तस्यासते सुताः ।
विभान्ति पुरतो यासां तृणवत्त्रिदिवस्त्रियः ॥ २६९ ॥
तासां तातेन विश्रब्धं प्रारब्धोऽस्ति स्वयंवरः ।
रचयांचक्रिरे मञ्चास्तत्र वै चित्रशालिनः ॥ २७० ॥

राजानो राजपुत्राश्च शतशः सन्त्युपस्थिताः।
आपतन्त्यधुना केचिदापतिष्यन्ति केचन ॥ २७१ ॥
ततः कलाकलापेन रूपेण वयसापि च।
योग्या विचित्रवीर्यस्य सुतास्ताः काशिभूपतेः ॥ २७२ ॥
गाङ्गेयस्तद्वचः श्रुत्वा तत्त्वदृष्टिरतर्कयत्।
किमहो काशिराजेन नानुजो मे निमन्त्रितः ॥ २७३ ॥
न गन्तव्यमनाहूतैर्महीपालैः स्वयंवरे।
अतो गत्वाहमेकैकः करिष्ये सर्वमीप्सितम् ॥ २७४ ॥
एवं विमृश्य गाङ्गेयो रथेन प्रस्थितो द्रुतम्।
जवनैर्वाजिभिर्वेगादगमच्च स्वयंवरे ॥ २७५ ॥
तत्र सिंहासनासीनानुच्चैर्मञ्चेषु भूपतीन्।
सोऽपश्यद्ब्रह्मासुराकल्पान्विमानेष्वमरानिव ॥ २७६ ॥
उरोलोलन्मनोहारिहारास्तिस्रोऽपि बालिकाः।
दृष्ट्वा विचित्रवीर्यार्थे स हर्तुमकरोन्मनः ॥ २७७ ॥
प्रत्येकमात्मनः कन्यालाभं संभाव्य भूपतीन्।
तांस्तान्विवृण्वतो भावान्हसति स्म स मानसे ॥ २७८ ॥
अथ तासां पुरो धात्र्या कीर्त्यमानेषु राजसु।
रथात्तार्क्ष्य इवोत्फालः स रङ्गाङ्गणमाविशत् ॥ २७९ ॥
स तं स्वयंवरं राजनक्रचक्रसमाकुलम्।
बाढं विलोडयामास पयोधिमिव लीलया ॥ २८० ॥
आच्छिद्य कन्यारत्नानि सर्वेषामेव पश्यताम्।
रथमारोपयामास भीष्मो भीष्मपराक्रमः ॥ २८१ ॥
स्यन्दने भयनिस्पन्दा वेपमानवपुर्लताः।
सुताश्च काशिराजस्य स्निग्धमुग्धमभाषत ॥ २८२ ॥
वत्साः किमपि मा भैष्ट नानिष्टं वः करिष्यते।
भीष्मोऽस्मि शान्तनोः सूनुर्भवतीनां प्रियंकरः ॥ २८३ ॥

राजा विचित्रवीर्योऽस्ति जैत्रदोर्वीर्यदुर्जयः ।
एते सर्वेऽपि यस्याग्रे गुणैर्बहुतृणं नृपाः ॥ २८४ ॥
अनुभूय प्रियाभूय तस्य स्मरसमाकृतेः ।
हस्तिनापुरसाम्राज्यं चिरं निविशताद्भुतम् ॥ २८५ ॥
विनयावर्जितोऽत्यन्तं तस्याहं बन्धुरग्रजः ।
तदर्थं रथमारुह्य युष्मानानेतुमागतः ॥ २८६ ॥
तस्मिंस्ता निस्तरङ्गेण रागेणाक्रान्तचेतसः ।
इदं गाङ्गेयवचनं तथेति प्रतिपेदिरे ॥ २८७ ॥
प्रतिपत्तिचलन्मौलिनृत्यत्ताटङ्करश्मिभिः ।
ताः स्फीतप्रीतयश्चक्रुस्तस्य नीराजनामिव ॥ २८८ ॥
राज्ञां मनोरथैः सार्धं रथं भीष्मो न्यवर्तयत् ।
कुर्वन्कुण्डलितं चापमुच्चैः स्वरमुवाच च ॥ २८९ ॥
सर्वे शृणुत भो भूपाः प्रौढदोःस्थानशालिनः ।
युष्माकं पश्यतां सैष भीष्मः कन्या हरत्यमूः ॥ २९० ॥
ततो वः कोऽपि जागर्ति यदि दोर्दण्डचण्डिमा ।
तदा कोऽप्यायुधं धत्तामयमूर्ध्वंदमोऽस्म्यहम् ॥ २९१ ॥
तदा क्षुब्धार्णवनिभो रङ्गक्षोभभवो ध्वनिः ।
स कश्चिदासन्मन्येऽसौ बिभिदे येन रोदसी ॥ २९२ ॥
रभसोत्थास्नुभूपानां कृष्णाभिः सिचयाञ्चलैः ।
भूगताभिर्मयं भूरि प्रसूतमसिधेनुभिः ॥ २९३ ॥
पलायनकृतेऽवश्यं व्यवस्यन्तोऽपि कातराः ।
संबाधकृतसंरोधात्प्रचेलुर्न पदात्पदम् ॥ २९४ ॥
मुक्ताकलापमुक्तानां चूर्णैः कीर्णावनिर्बभौ ।
अमेयगाङ्गेययशश्चन्दनेनेव चर्चिता ॥ २९५ ॥
रत्नाङ्गदानामन्योन्यकोटिघट्टनसंभवः ।
क्षोमाणि क्षोणिपालानामधाक्षीदाशुशुक्षणिः ॥ २९६ ॥

तदानीं तत्र केषांचिदभ्यस्तस्तेयकर्मणाम् ।
मूलोन्मूलनदौर्गत्यस्तुत्यः शान्तनवोऽभवत् ॥ २९७ ॥
वीक्ष्य भीष्मं भयक्षोभाच्छिरस्तः स्रस्तबन्धनः ।
केनापि राजपुत्रेण किरीटो नोपलक्षितः ॥ २९८ ॥
नृपपञ्चाननाः केचिल्लीलालालसचेतसः ।
असिमुष्टिमवष्टभ्य यथास्थितमवस्थिताः ॥ २९९ ॥
अथ शौण्डीरदोर्दण्डाः केऽपि संभूय भूमिपाः ।
सद्यः संवर्मयामासुरसिवीरा हि काश्यपी ॥ ३०० ॥
पुलकोद्भेदमेदस्विवपुषां पौरुषस्पृशाम् ।
तेषां वर्मत्रुटत्संधियुद्धसङ्गं व्यधाद्दृढम् ॥ ३०१ ॥
काशिराजपुरोगैस्तैर्भृशं सर्वाङ्गवर्मितैः ।
विपक्षक्षितिपैरेत्य भीष्मो भीष्ममभाष्यत ॥ ३०२ ॥
हंहो क्षत्रकुलोत्तंस किमक्षत्रं वितन्यते ।
अयं स्वयंवरध्वंसो महांस्ते हेतुरंहसाम् ॥ ३०३ ॥
श्रियः स्त्रियो वा माभूवन्नाहूता दुर्नयेन याः ।
विपदागर्तवर्ते यत्पातयन्त्येव ताः पतिम् ॥ ३०४ ॥
तत्प्रतीच्छ शरैस्तीक्ष्णैः पापस्यास्य व्यपोहकम् ।
गुरुस्तवास्मदिष्वासः प्रायश्चित्तं प्रदास्यति ॥ ३०५ ॥
अथाभाषत गम्भीरधीरः शान्तनुनन्दनः ।
भो भूमिपालाः सुष्ठूक्तं युष्माभिर्न्यायनिष्ठुरैः ॥ ३०६ ॥
परमुर्वी च कन्या च सर्वसाधारणी भवेत् ।
गृह्णातु स हि यस्यास्ति विक्रमो निपुणः पुनः ॥ ३०७ ॥
नैवास्ति विक्रमो यस्य स हास्यः स्पृहयन्नपि ।
दरिद्र इव रत्नानि विविधानि धनं विना ॥ ३०८ ॥
विक्रमेण धनेनैव विना यत्तस्करा इव ।
कन्यारत्नानि गृह्णीथ तद्यूयमपराधिनः ॥ ३०९ ॥

आगस्विनां च दण्डाय कोदण्डो मम पण्डितः ।
इत्युक्त्वा स क्षुरप्रेण तेषां केतूनपातयत् ॥ ३१० ॥
अथ तेऽपि रथश्रेणिप्रारब्धपरिमण्डलाः ।
मध्येकृत्य शितैर्भीष्मं पत्रिभिः पर्यताडयन् ॥ ३११ ॥
अभ्यापतन्तो युगपन्निपीततपनातपाः ।
तस्य ते विशिखाश्छायां तेनिरे नापनिन्यिरे ॥ ३१२ ॥
वीरंमन्यतया दृप्तानन्यनिन्दापटीयसः ।
स तानवज्ञया पश्यन्मृगारातिर्मृगानिव ॥ ३१३ ॥
प्रतिक्षिपन्तः स्वच्छन्दमायुधान्युद्धतानि ते ।
जैत्रस्थामानमात्मानं मेनिरे जितकाशिनम् ॥ ३१४ ॥
इत्थं प्रगल्भमानेषु ससंरम्भेषु तेष्वथ ।
खिन्ना नरेन्द्रनन्दन्यः स्वं निनिन्दुर्मुहुर्मुहुः ॥ ३१५ ॥
धिगस्मान्मन्दभाग्यानां धुरि वर्तामहे वयम् ।
इतो भ्रष्टास्ततो भ्रष्टा भविताः स्मोऽधुना ध्रुवम् ॥ ३१६ ॥
क्वैते नृपाः परोलक्षाः क्व वायं दोर्द्वितीयकः ।
तदिदानीं विपन्नेऽस्मिन्विपन्नं नो मनोरथैः ॥ ३१७ ॥
इत्थं ताः कुमुखीर्वीक्ष्य भीष्मस्तत्कर्म निर्ममे ।
मूर्धानं धूनयद्भिर्यत्त्रिदशैर्ददृशे दिवि ॥ ३१८ ॥
निशितौ सर्वतो मुष्ट्या तान्प्रत्येकं व्रणाङ्कितान् ।
शरैश्चकार सुश्लोकां स्वप्रशस्तिं लिखन्निव ॥ ३१९ ॥
यावद्विपक्षमक्षेपं लघुहस्तः क्षिपन्निषून् ।
वीक्षांचक्रे शतैरेकोऽप्यसंख्यैरात्मसंख्यया ॥ ३२० ॥
भीष्मग्रीष्मरवेः क्षिप्तमार्गणैः किरणैरिव ।
काप्यल्पा अपि नैक्षन्त क्षत्रनक्षत्रजातयः ॥ ३२१ ॥
राजैकः काशिराजस्तु विच्छायवपुरञ्जसा ।
रणव्योमैकदेशस्थः स्तोकस्तोकं विलोकितः ॥ ३२२ ॥

हृष्यन्मनोभिः कन्याभिर्मुक्तामिव विलक्षताम्।
जाह्नवीसूनुरह्नाय तदानीं प्रत्यपद्यत ॥ ३२३ ॥
उपेत्य प्रीणयामास स तथा काशिभूपतिम्।
यथा विचित्रवीर्याय स्वयं प्रादादसौ सुताः ॥ ३२४ ॥
स प्रीतिस्फारनेत्राभिस्ताभिर्बालाभिरन्वितः।
हस्तिनापुरमारब्धमहोत्सवमुपाययौ ॥ ३२५ ॥
स वैवाहिकमाङ्गल्यैस्तिस्रस्ताः काशिनन्दिनीः।
भ्रात्रा विचित्रवीर्येण प्रमोदादुदवाहयत् ॥ ३२६ ॥
ताः प्राप्य नृपतिः प्रेमरसैककनकालुकाः।
सिञ्चन्पञ्चापि विषयान्सिषेवे सोऽतिशाद्वलान् ॥ ३२७ ॥
इषून्पञ्चापि पञ्चेषुः प्रक्षिपन्नपि लक्षशः।
प्रेयसीनामसौ मान्य इति तस्य प्रियोऽभवत् ॥ ३२८ ॥
कामो नासक्तिसेव्योऽपि तेनादृश्यत गौरवात्।
प्रायेण यौवनान्धानां सुलभो हि विपर्ययः ॥ ३२९ ॥
ततो विचित्रवीर्यस्य संप्राप्तावसरः स्मरः।
धर्मार्थौ जग्रसे राहुः सूर्याचन्द्रमसाविव ॥ ३३० ॥
स प्रेयसीनां तिसृणां यश्चतुर्थः सदा भवेत्।
तल्लोके लोकपालानां भवति स न पञ्चमः ॥ ३३१ ॥
कामासक्तस्य तस्येत्थं प्रावर्तत बलक्षयः।
अनङ्गेऽतिप्रसङ्गो हि विरङ्गायैव केवलम् ॥ ३३२ ॥
क्षीयमाणबलं ज्ञात्वा गाङ्गेयस्तमवोचत।
असौ स्वच्छस्त्वयि स्वच्छे वत्स त्रासो मणेरिव ॥ ३३३ ॥
पीनवर्मितसर्वाङ्गान्कथं शत्रून्विजेष्यसि।
अनङ्गेनापि कल्याणं यस्त्वमेवमजीयथाः ॥ ३३४ ॥
धर्मार्थावेव न परं कामासक्तस्य नश्यतः।
मूलं सर्वपुमर्थानां वपुरप्यपचीयते ॥ ३३५ ॥

---

१. अत्र च दीर्घकरणम् 'न तिसृचतसृ–' (६।४।४) इति पाणिनीयसूत्रविरुद्धं ज्ञेयम्.

दुःसहाः पुष्पबाणस्य बाणाः पुष्पमया अपि ।
यत्तेऽभूवंस्ततः प्रौढान्सोढासि कथमायसान् ॥ २३६ ॥
व्यधीयत तवैताभिरबलाभिर्बलक्षयः ।
बलवद्भिस्तु रुद्धस्य न जाने किं भविष्यति ॥ २३७ ॥
कुरङ्गाक्षीषु नात्यन्तः प्रसङ्गः संगतः सताम् ।
अत्यासन्नाभिरेताभिर्दूरे स्युर्गुरवो गुणाः ॥ २३८ ॥
**भीष्मो** विचित्रवीर्याय शिक्षामेवं प्रयच्छति ।
तत्र पुत्रानुशिष्ट्यर्थमाययौ सत्यवत्यपि ॥ २३९ ॥
साप्यभाषिष्ट तनयं बाष्पाविलविलोचना ।
अकस्मादेव मे वत्स किं च नात्सि मनोरथान् ॥ २४० ॥
मुखं स्नुषाणामुद्वीक्ष्य मुदमासादयं पराम् ।
इदानीमस्मि सोत्कण्ठा तवापत्यविलोकने ॥ २४१ ॥
सा नु सांप्रतमेतेन त्वद्दौर्बल्येन दुर्बला ।
सहोदयव्यया पुत्रैः सवित्रीणां मनोरथाः ॥ २४२ ॥
सर्वासां क्षत्रियस्त्रीणां परं वीरप्रसूरहम् ।
इमं वत्स ममोत्सेकं लीलयैव त्वमच्छिदः ॥ २४३ ॥
कुरुवंशकुलस्त्रीणां पुत्रिणीनामहं त्वया ।
धुरि संस्थापिता वत्स त्वयैवोत्थापिताधुना ॥ २४४ ॥
तत्स्वगोत्रोचिताचारव्यभिचारं समाचर ।
अस्मिंस्त्वत्पूर्वजो ब्रूहि पथि कः पथिकोऽभवत् ॥ २४५ ॥
तदा युक्तस्तव ज्यायान्बन्धुर्धत्ते मुदं यथा ।
यथा सिद्धेन्ममेच्छा च प्रवर्तेथास्तथानिशम् ॥ २४६ ॥
अनुशिष्टिमिति श्रुत्वा भ्रातुर्मातुश्च सादरम् ।
**विचित्रवीर्यः** स्वं कर्म स्मृत्वा दूरमलज्जत ॥ २४७ ॥
अदीपिष्ट तदादिष्टं निर्मले तस्य चेतसि ।
अर्पितं दर्पणे भानोर्भृशमुज्जृम्भते महः ॥ २४८ ॥

शिक्षामादाय तां मूर्ध्ना प्राञ्जलिस्तौ विसृज्य च ।
राजा धर्मार्थकामेषु समवृत्तिरजायत ॥ ३४९ ॥
आबभाराम्बिका गर्भमन्यदोद्दामदोहदम् ।
सुलग्ने सुतमुद्दीप्तप्रभापूतमसूत च ॥ ३५० ॥
भीष्मेण सत्यवत्या च महोत्सवपुरःसरम् ।
धृतराष्ट्र इति श्लाघ्यं तस्य नाम विनिर्ममे ॥ ३५१ ॥
स दधौ जनुषान्धत्वं केनापि प्राच्यकर्मणा ।
स नास्ति प्राङ्निबद्धे हि यो रुणद्धि शुभाशुभे ॥ ३५२ ॥
अम्बालिकापि तनयं तस्यानुजमजीजनत् ।
आजन्म पाण्डुरोगत्वाद्यः पाण्डुरिति पप्रथे ॥ ३५३ ॥
गुणाम्बुनिधिरम्बायास्तनूजः समजायत ।
यं चक्रुर्गुरवः सर्वविदुरं विदुराभिधम् ॥ ३५४ ॥
अथ तेषु कुरोर्वंशं जन्मनालंकरिष्णुषु ।
शुभैरुज्जृम्भितं भावैः प्रलीनमशुभैः पुनः ॥ ३५५ ॥
सूचकश्चरटश्चौरः कृपणः पारदारिकः ।
एते शब्दास्तदा प्रापुरभिधेयेन वन्ध्यताम् ॥ ३५६ ॥
लोभे सर्वत्र साम्राज्यमेकच्छत्रं नयेस्तदा ।
निरन्वयविनाशेन व्यनश्यद्दुर्नयः पुनः ॥ ३५७ ॥
तदा नाधिर्न च व्याधिर्बाधते स्म जनं क्वचित् ।
न दुर्बलो बलिष्ठेन कश्चनाप्यभ्यभूयत ॥ ३५८ ॥
नावृष्टिर्नातिवृष्टिश्च तदा प्रादुरभूद्भुवि ।
इति प्रीतिरघाताय नान्याप्यासीत्कुटुम्बिनाम् ॥ ३५९ ॥
पुष्यन्ति स्म फलन्ति स्म कालेऽवश्यं महीरुहः ।
पुष्यन्ति स्म रसोत्कर्षं पुष्पेषु च फलेषु च ॥ ३६० ॥
अनुभावात्कुमाराणामित्यभूदुदयोद्भवः ।
भवेद्वाङ्मनसातीतः प्रभावो हि महात्मनाम् ॥ ३६१ ॥

किंतु स्त्रीव्यसनेनातिमनोभीष्टेन सर्वदा ।
चिराय मिलितेनैव भूयोऽप्यालिङ्गितो नृपः ॥ ३६२ ॥
ततः क्षीणतनुः सोऽभूत्प्रियास्वासक्तमानसः ।
रामासु भृशमासक्तिः कारणं राजयक्ष्मणः ॥ ३६३ ॥
राजयक्ष्मपरीवारकासश्वासापनिद्रता ।
रुजोऽन्या अपि राजानमरुजन्ननु वासरम् ॥ ३६४ ॥
चित्रैर्विचित्रवीर्यस्तैरातङ्कैराकुलीकृतः ।
संचक्राम परं लोकं कामस्याहो दुरन्तता ॥ ३६५ ॥
तस्मिन्नस्तमिते सूनुभानौ सत्यवती तदा ।
शोकान्धकारवैधुर्यमधत्त द्यौरिवाधिकम् ॥ ३६६ ॥
विललाप च हा वत्स हा परिच्छदवत्सल ।
हा कौरवकुलोत्तंस हा गमः कामिमां दशाम् ॥ ३६७ ॥
इत्थं सा विलपन्त्येव मूर्च्छिता भूतलेऽपतत् ।
अस्तोकं शोकसंतापं तदा च न विवेद तम् ॥ ३६८ ॥
मूर्छाव्यपगमं प्राप्ता कथंचिच्चन्दनादिभिः ।
स्मृत्वा पुत्रगुणान्भूयो मुक्तकण्ठं रुरोद सा ॥ ३६९ ॥
अभ्युपेत्य तदाभ्यर्णमुरस्ताडनपूर्वकम् ।
रुदन्ति स्म गलद्बाष्पमम्बिकाप्रमुखाः स्नुषाः ॥ ३७० ॥
वयमेकपदाः स्वामिंस्त्वयास्तं समुपेयुषा ।
दुस्थामवस्थामानीता नलिन्य इव भानुना ॥ ३७१ ॥
क्रीडादिष्वपि न क्रीडामेकाकी कृतवानसि ।
इदानीं तु विमुच्यास्मान्किमेको गतवानसि ॥ ३७२ ॥
विप्रयोगासहिष्णूनां त्वदुपास्तिसुखस्पृशाम् ।
कस्मादकस्मादस्माकमिदं वैमुख्यमागमः ॥ ३७३ ॥
निजमेनं प्रियावर्गं जानासि विरहासहम् ।
तद्देहि देहि प्राणेश द्रुतं प्रतिवचोऽधुना ॥ ३७४ ॥

एवं विलापवैकल्यं प्राप्ताः संस्थाप्य तास्तदा ।
चकार तस्य गाङ्गेयो निवापप्रमुखाः क्रियाः ॥ ३७५ ॥
बाल्ये चापल्यललितैः कुमाराणां मनोरमैः ।
स शोकं स्तोकतां निन्ये सत्यवत्याः कथंचन ॥ ३७६ ॥
तथाजनि कुमाराणां बन्धुस्नेहः परस्परम् ।
यथैषां क्षणमप्यस्थादेको नैकतमं विना ॥ ३७७ ॥
बालेष्वपि कुमारेषु स्वर्गतेऽपि नराधिपे ।
भयाद्भीष्मस्य राजानो सीमानं न ललङ्घिरे ॥ ३७८ ॥
तेषां शस्त्रे च शास्त्रे च भीष्म एवाभवद्गुरुः ।
अम्भोधराणामम्भोधिरेव कुक्षिंभरिर्भवेत् ॥ ३७९ ॥
नृलोक इव लोकेषु तेषु त्रिष्वपि बन्धुषु ।
गोत्राधारतया पाण्डुर्मध्यमोऽपि वि(व्य)शिष्यत ॥ ३८० ॥
कनिष्ठं धृतराष्ट्रस्तं गुणज्येष्ठममन्यत ।
लघीयानपि जायेत गुणैर्लोको गुणैर्गुरुः ॥ ३८१ ॥
धृतराष्ट्रमभाषिष्ट भीष्मो मधुरया गिरा ।
वत्स राज्यमिदानीं त्वां ज्यायांसमुपतिष्ठताम् ॥ ३८२ ॥
स जगाद न योग्योऽस्मि राज्यस्याहं ध्रुवं ततः ।
पाण्डुमभ्येति राज्यश्रीर्दिनश्रीरिव भास्करम् ॥ ३८३ ॥
असौ त्रयाणामस्माकं योग्यो राज्यधुरंधरः ।
उक्तो मुक्ताकलापेऽपि मध्यस्थो नायको परम् ॥ ३८४ ॥
गुणश्रेणिसुधासिन्धुबन्धोरुज्जागरौजसः ।
अहं तु नित्यमेतस्य दास्यायैव कृतस्पृहः ॥ ३८५ ॥
इति निर्बन्धतस्तस्य सुमुहूर्ते महोत्सवात् ।
राज्याभिषेकमाधत्त पाण्डोर्भीष्मः प्रमोदतः ॥ ३८६ ॥
कीर्तिज्योत्स्नाभरव्याप्तरोदसीकन्दरोदरे ।
तत्रोदिते नवे राज्ञि भृशं मुमुदिरे प्रजाः ॥ ३८७ ॥

भीष्मे च धृतराष्ट्रे च धृतराज्यधुरे सति ।
न विदामास साम्राज्यचिन्ताभारक्लमं नृपः ॥ ३८८ ॥
दुष्टनिग्रहनिःशूकजागरूकभुजद्वयः ।
पाण्डुः प्रचण्डदोर्दण्डान्वशीचक्रे विशांपतीन् ॥ ३८९ ॥
कन्दर्पकामिनीरूपदर्पसर्पस्य जाङ्गुली ।
गान्धारीप्रभृतिरष्टावुपादायादसोदराः(?) ॥ ३९० ॥
सुबलक्ष्मापतेः सूनुर्गान्धारपतिरन्यदा ।
शकुनिर्भीष्ममभ्येत्य बद्धाञ्जलिरभाषत ॥ ३९१ ॥ (युग्मम्)
कुलदेव्योपदिष्टाय विशिष्टक्रमशालिने ।
तिष्ठन्ते धृतराष्ट्राय स्वसारो मे पतिंवराः ॥ ३९२ ॥
अम्बिकासूनुना नूनमनूनगुणधारिणा ।
एतास्तदार्य सोत्साहं विवाहयितुमर्हसि ॥ ३९३ ॥
इत्थमभ्यर्थितस्तेन स्वह्नि जह्नुसुतासुतः ।
एतासां पतिमष्टानां धृतराष्ट्रमतिष्ठिपत् ॥ ३९४ ॥
अनुरूपगुणग्रामा पाण्डोरुड्डामरौजसः ।
का कलत्रं भवित्रीति चिन्ताभूद्भीष्मचेतसि ॥ ३९५ ॥
भीष्मः पाण्डुयुतो जातु पान्थं राजपथे क्वचित् ।
चित्रं चित्रपटव्यग्रकराग्रं कंचिदैक्षत ॥ ३९६ ॥
नारीरूपं पटे तत्र दृष्ट्वा पाण्डुरचिन्तयत् ।
एतस्यामेव पर्याप्तं सौन्दर्यकथया ध्रुवम् ॥ ३९७ ॥
नह्येषा रूपरेखा स्यान्मानुषीषु पुरंध्रिषु ।
तदियं किं रतिः किंवा कमला किमु रोहिणी ॥ ३९८ ॥
एतस्याः कोमलाकारावङ्घ्री पङ्करुहे ध्रुवम् ।
अङ्गुल्यो यत्र पत्रन्ति सौन्दर्यं मकरन्दति ॥ ३९९ ॥
जङ्घाकाण्डे किलैतस्या नाले पादसरोजयोः ।
रम्भास्तम्भायितं चाभ्यामूरुभ्यां यौवनोत्सवे ॥ ४०० ॥

नितम्बस्थलमेतस्या जैत्रभूमिर्मनोभुवः ।
यः सदैवात्र वास्तव्यः शास्ति विश्वत्रयीमसौ ॥ ४०१ ॥
बलिष्ठ एव मध्योऽस्याः कृशोदर्याः कृशोऽपि हि ।
यो वलित्रितयाक्रान्तोऽप्यधिकं पुष्यति श्रियम् ॥ ४०२ ॥
अपूर्वं निर्वृतिस्थानमेतस्याः स्तनमण्डलम् ।
मुक्ता व्यक्ता विलोक्यन्ते यत्र हारिणि भासुराः ॥ ४०३ ॥
एतस्याः सरलाकारो रोमराजिर्विराजते ।
कन्दर्पदन्तिनो बिभ्रत्यालानस्तम्भविभ्रमम् ॥ ४०४ ॥
यदस्या वदने पश्ये पार्वणेन्दोर्विलोकनम् ।
गुञ्जापुञ्जेन सार्धं तत्तपनीयस्य तोलनम् ॥ ४०५ ॥
अस्याः सुकेश्याः कबरीभारः केनोपमीयते ।
समालम्बितरोलम्बैः सुस्निग्धो यस्य कालिमा ॥ ४०६ ॥
इत्येवं चिन्तयत्येव स्मेरवक्राम्बुजे नृपे ।
सौधमानीय गाङ्गेयः पृच्छति स्म तमध्वगम् ॥ ४०७ ॥
भद्र प्रबुद्धराजीवमुखी केयमलिख्यत ।
इह चित्रपटे नारी दिव्यनारीविजित्वरी ॥ ४०८ ॥
पान्थः पुरस्तादस्तोकविस्मयस्मेरचेतसे ।
अथासौ मूलतस्तस्मै तं वृत्तान्तमचीकथत् ॥ ४०९ ॥
मथुरेत्यस्ति वास्तव्यैः श्रीमद्भिर्भूषिता पुरी ।
आलिङ्गतीव कालिन्दी या मुदा वीचिबाहुभिः ॥ ४१० ॥
तेजोधाम यदुर्नाम तस्यामासीन्नरेश्वरः ।
यतोऽभूद्भुवनोत्तंसो वंशो यादवभूभुजाम् ॥ ४११ ॥
प्रतापी तनुजस्तस्य शूरः शूरसमोऽभवत् ।
लीनं यत्रोदिते शत्रुकौशिकैर्गिरिकन्दरे ॥ ४१२ ॥
तस्य शौरिः सुवीरश्च द्वावभूतां तनूद्भवौ ।
कविवद्भैरपि भ्रान्तं भुवि स्वैरं ययोर्गुणैः ॥ ४१३ ॥

राज्यं च यौवराज्यं च तयोर्दत्त्वा यथाक्रमम् ।
ययौ तपस्यामध्यास्य दिवं सूरनराधिपः ॥ ४१४ ॥
रामलक्ष्मणयोः साम्यं तैस्तैस्तौ भेजतुर्गुणैः ।
ताभ्यां परमरातिभ्यो वनक्लेशः समर्पितः ॥ ४१५ ॥
दत्त्वा शौरिः सुवीराय राज्यमुज्जृम्भवैभवम् ।
स्वयं कुशार्तदेशेषु विजहार यदृच्छया ॥ ४१६ ॥
स तेषु वासवस्पर्धिशौर्यः शौर्यपुरं व्यधात् ।
श्रीपतीन्बिभ्रता भूरीञ्जिग्ये येनामरावती ॥ ४१७ ॥
अन्धकवृष्णिप्रमुखास्तत्र शौरेस्तनूरुहः ।
वभूवुर्बहवो बाहुस्थामसंस्थापितश्रियः ॥ ४१८ ॥
शौरिर्वितीर्य साम्राज्यं सुतायान्धकवृष्णये ।
प्रतिगृह्य परिव्रज्यां शिवश्रियमशिश्रियत् ॥ ४१९ ॥
संजज्ञिरे सुवीरस्य भोजवृष्ण्यादयः सुताः ।
अम्लायन्यत्प्रतापेन शत्रुस्त्रीपत्रवल्लयः ॥ ४२० ॥
सुवीरो माथुरं दत्त्वा साम्राज्यं भोजवृष्णये ।
सौवीराख्यं पुरं कीर्तिसिन्धु सिन्धुषु निर्ममे ॥ ४२१ ॥
विहरन्नन्वहं तत्र वाप्यां वाप्यां वने वने ।
पुण्यप्रागल्भ्यलभ्यानि स सुखानि न्यसेवत ॥ ४२२ ॥
भुञ्जतो मथुराराज्यं भोजवृष्णेर्महौजसः ।
उग्रसेनोऽसिसेनानामन्तकृत्तनयोऽभवत् ॥ ४२३ ॥
आसीदन्धकवृष्णेश्च सुभद्रेति सधर्मिणी ।
निष्ठा यत्र सदाचारतारतम्यमुपाययौ ॥ ४२४ ॥
दिशां नाथा इव प्रौढा दशाभूवन्सुतास्तयोः ।
येषु नीतिनिवासेषु नाभवत्कोऽपि गोत्रहा ॥ ४२५ ॥
समुद्रविजयः पूर्वमक्षोभ्यस्तदनन्तरम् ।
स्तिमितः सागरश्चैव हिमवानचलस्ततः ॥ ४२६ ॥

धरणः पूरणस्तस्मादभिचन्द्राभिधोऽपि च ।
वसुदेवश्च दाशार्हो दशाप्येते प्रकीर्तिताः ॥४२७॥ (युग्मम्)
तेषामुपरि पुत्राणां सुभद्रां सुषुवे सुताम् ।
परमां मुदमध्यास्त यज्जन्मनि निजं मनः ॥ ४२८ ॥
यज्जन्मलग्नमालोक्य ज्ञानिनोऽकथयन्निदम् ।
यद्भवित्री सवित्रीयं सम्राजामङ्गजन्मनाम् ॥ ४२९ ॥
जनानां प्रेषितं दुःखैः सुखैरुन्मुषितं पुनः ।
किं न जन्मोत्सवे तस्याः शुभोदर्कमभूद्भुवि ॥ ४३० ॥
पुत्रजन्ममहेभ्योऽपि विशिष्टोऽन्धकवृष्णिना ।
तस्या जन्मोत्सवश्चक्रे प्रीतिरत्र प्रयोजिका ॥ ४३१ ॥
कल्याणपुषि पौषेऽह्नि दीनोद्धरणपूर्वकम् ।
प्रीत्या पितृभ्यामेतस्या नाम कुन्तीति निर्ममे ॥ ४३२ ॥
सा बभूव शिशुत्वेऽपि कामं पृथुमनोरथा ।
पृथेति प्रथितामाख्या····मभजत्ततः ॥ ४३३ ॥
प्रापत्प्रसर्पत्कन्दर्पं सा क्रमान्नवयौवनम् ।
यत्र पित्रोर्वरस्यार्थे चिन्ता जागर्ति चेतसि ॥ ४३४ ॥
अस्याः स्वच्छन्दमुत्सङ्गखेलिन्यामन्यदा नृपः ।
ज्येष्ठं समुद्रविजयं व्याजहार तनूरुहम् ॥ ४३५ ॥
एतस्या मम वत्सायाः को नाम भविता वरः ।
इति मे वत्स महतीं चिन्तामुच्छेत्तुमर्हसि ॥ ४३६ ॥
सोऽप्यभाषिष्ट यद्येवं प्रेष्यतां कोऽपि पूरुषः ।
देव देशेष्वशेषेषु वरवीक्षाविचक्षणः ॥ ४३७ ॥
यथा स प्रतिभाप्रौढोऽभिरूपो रूपशालिनम् ।
सुशर्म सदृशं शुद्धान्वयमन्वेषते वरम् ॥ ४३८ ॥
स्वयंवरे तु दोषोऽयं यदेकस्मिन्वरे वृते ।
ईर्ष्यया कलहायन्ते नितान्तमपरे नृपाः ॥ ४३९ ॥

इति ज्येष्ठात्मजगिरा मामाहूय महीपतिः ।
आदिशत्सर्वदेशेषु यथा कोरक गम्यताम् ॥ ४४० ॥
वरः कश्चिद्वरेण्यश्रीर्यस्तुभ्यमवभासते ।
उपागत्य तमस्माकं वेगेनैव निवेदय ॥ ४४१ ॥
भूपालो दुहितुस्तस्या रूपं चित्रपटे ततः ।
लेशेनालिख्य देशेषु क्रमाद्भ्राम्यन्निहागमम् ॥ ४४२ ॥
असौ रूपेण कन्दर्पदर्पहा पाण्डुभूपतिः ।
मया दृष्टश्च हृष्टश्च जातोऽस्मीप्सितलाभतः ॥ ४४३ ॥
आर्य शौर्यपुरेशस्य सुता तत्पाण्डुभूभुजा ।
युज्यतामनुरूपेण द्विरेफेणेव मालती ॥ ४४४ ॥
किं च काञ्चनवर्णास्याः कनिष्ठास्ति सहोदरा ।
नाम्ना माद्रीति रूपेण यस्याः श्रीरेव सोदरा ॥ ४४५ ॥
विख्यातो दमघोषाख्यस्तां वृणीते स चेदिपः ।
ज्यायस्यां किंत्वनूढायामियं नोद्वाहमर्हति ॥ ४४६ ॥
तदार्य सर्वकार्येषु तिष्ठते त्वयि निर्णयः ।
एते सुखिन्यौ कन्ये स्तामास्तामन्यद्विकल्पना ॥ ४४७ ॥
इत्थं तेनार्थिता भीष्मस्तत्सर्वं प्रत्यपद्यत ।
स्वयं वाञ्छितमागच्छत्को निराकुरुते कृती ॥ ४४८ ॥
अथोत्पाद्य नवं रागं सा मृगाक्षी मनोभुवा ।
आश्लिष्यत पटात्तस्मात्पाण्डुश्चित्रपटे तदा ॥ ४४९ ॥
स मध्येमनसं कुन्तीमश्रान्तं धारयन्नपि ।
बहिरालोकयामास स्थाने स्थाने पुरःस्थिताम् ॥ ४५० ॥
कदा कुन्तीमुखाम्भोजे मन्नेत्रभ्रमरद्वयी ।
पाता लावण्यकिञ्जल्कमित्यासीदुत्सुको नृपः ॥ ४५१ ॥
पृष्ट्वा सत्यवतीं शौर्यपुरे कोरकसंयुतम् ।
कार्यस्थैर्याय भीष्मः स्वं प्रेषयामास पूरुषम् ॥ ४५२ ॥

अथ शौर्यपुरे गत्वा समेतस्तेन कोरकः ।
कुन्तीविभूषितोत्सङ्गमपश्यद्यादवेश्वरम् ॥ ४५३ ॥
व्यजिज्ञपच्च राजेन्द्र तवादेशाद्गतोऽस्म्यहम् ।
अध्वक्रमात्सदामत्तहास्तिके हस्तनापुरे ॥ ४५४ ॥
उत्फुल्लपुण्डरीकाक्षस्तत्र पाण्डुक्षितीश्वरः ।
अदृश्यत दृशामेकः पार्वणश्चान्द्रिकोदयः ॥ ४५५ ॥
नेत्रयोस्तत्र पुंरत्ने गते विषयतां मया ।
अद्यापि रत्नगर्भेति भूरित्थं पर्यभाव्यत ॥ ४५६ ॥
तस्य पीनोन्नतावंसौ लीलाशैलौ नृपश्रियः ।
विशालं वीरलक्ष्म्याश्च तल्पकल्पमुरस्थलम् ॥ ४५७ ॥
प्रीणितार्थिजनस्तस्य पाणिः कल्पद्रुपल्लवः ।
विश्वत्राणकृते बाहोः कः पुरीपरिघः पुरः ॥ ४५८ ॥
पितृतुल्यः पितृव्योऽस्ति पाण्डोर्भीष्म इति श्रुतः ।
स चित्रपटवृत्तान्तं सर्वं वेत्ति स मन्मुखात् ॥ ४५९ ॥
चक्रवर्त्यतिवर्तीनि तदङ्गे लक्षणान्यपि ।
शक्रोऽपि स्पृहयत्येव यस्मै स शास्ति विक्रमः ॥ ४६० ॥
पात्रं कलाकलापस्य विश्वस्य नयनोत्सवः ।
असौ योग्यो वरः कुन्त्या रोहिण्या इव चन्द्रमाः ॥ ४६१ ॥
कुन्तीं वरीतुं तेनायं प्रहितो निजपूरुषः ।
देव संप्रति कर्तव्यमेतस्या दिशतु स्वयम् ॥ ४६२ ॥
संभाव्य भूमिपालस्तमौदासीन्यस्पृशा दृशा ।
प्रातरावेदयिष्याम इत्युक्त्वा व्यसृजत्तदा ॥ ४६३ ॥
उत्थितायां सभायां च कोरकः स्वं गृहं ययौ ।
प्रीता पाण्डुगुणैः कुन्ती कन्यान्तःपुरमाययौ ॥ ४६४ ॥
पाण्डोरवनिमार्तण्डस्यावदातान्गुणान्रहः ।
धात्र्या निवेदयांचक्रे कुन्तीसाकूतमानसा ॥ ४६५ ॥

पराक्रमेण रूपेण विनयेन नयेन च ।
असमः सैष मातस्ते जामाता प्रतिभाति मे ॥ ४६६ ॥
भाग्यान्याविर्भविष्यन्ति न जाने कीदृशानि मे ।
विघटन्ते हि कार्याणि प्रतिकूले विधातरि ॥ ४६७ ॥
अथादिष्टो विशां पत्या प्रातराकार्य कोरकः ।
पाण्डवे पाण्डुरोगित्वान्न दातास्मि निजां सुताम् ॥ ४६८ ॥
कोरकेण नरेन्द्रोक्तं पुरुषाय न्यवेदयत् ।
तेनापि भीष्मपाण्डुभ्यां हस्तनापुरमीयुषा ॥ ४६९ ॥
एकान्ते तं नरं नीत्वा पाण्डुः पप्रच्छ सादरम् ।
ब्रूहि राजसुता भद्र किं नु मय्यनुरज्यते ॥ ४७० ॥
सोऽशंसदेव तां वेद्मि रागिणीमिङ्गितैस्त्वयि ।
तदा त्वां वर्णयामास कोरकः क्षितिपाग्रतः ॥ ४७१ ॥
भृशं रोमाञ्चितौ तस्याः कपोलफलकौ तदा ।
निमेषविमुखे जाते नेत्रे स्फारितपक्ष्मणी ॥ ४७२ ॥
सा श्रोत्रपुटमाधत्त निषिद्धविषयान्तरम् ।
सवेपथु वपुर्यष्टिमुवाह च मुहुर्मुहुः ॥ ४७३ ॥
मन्मथेनाथ पृथ्वीश पञ्चभिर्युगपच्छरैः ।
प्रहतः प्राप तं तापं येन नाप रतिः क्वचित् ॥ ४७४ ॥
क्षणं तस्थौ नृपः सौधे धारायन्त्रगृहे क्षणम् ।
क्षणं पल्लवपल्यङ्के कौसुमस्रस्तरे क्षणम् ॥ ४७५ ॥
जलार्द्रचन्दनं चन्द्रकर्पूराण्यपि भूपतेः ।
विलुम्पन्ति स्म संतापं न स्मरज्वरसंभवम् ॥ ४७६ ॥
अविन्दन्नरविन्दानामपि तल्पे रतिं क्वचित् ।
ययावुपवने पाण्डुः पुष्पाडम्बरबन्धुरे ॥ ४७७ ॥
कुन्तीविरहदाहार्तिप्रतीकारचिकीर्षया ।
तत्र प्रतिद्रु विश्राम्यन्सोऽद्राक्षीत्खदिरद्रुमम् ॥ ४७८ ॥

तस्य स्तम्भं निरालम्बं कीलैः कीलितमायसैः।
एकं नरं निरुच्छ्वासं दुःखितं सममैक्षत ॥ ४७९ ॥
सरसोदरमाकारं तस्यालोक्य क्षितीश्वरः।
आचकर्ष बलोत्कर्षाल्लीलया लोहकीलकान् ॥ ४८० ॥
छिन्नद्रुपातमपतत्सोऽतिमूर्छाविसंस्थुलः।
भूपतिर्लम्भयामास चेतनां चन्दनैश्च तम् ॥ ४८१ ॥
स पुमान्मुद्रिकान्यस्तमणिस्नपनवारिभिः।
सेचं सेचं व्रणश्रेणीं प्रगुणीकृतवान्स्वयम् ॥ ४८२ ॥
अथोचे पृथिवीनाथः पृथुना प्रश्रयेण तम्।
ब्रूहि कोऽसि महाभाग कथं चेयं दशा तव ॥ ४८३ ॥
स जगाद जगद्बन्धो वैताढ्यगिरिमण्डनम्।
अस्त्यानकास्ति(?) मत्पौरं पुरं हेमपुराभिधम् ॥ ४८४ ॥
तस्य स्वामी विशालाक्षनामा विद्याधरोऽस्म्यहम्।
भ्रमन्स्वैरविहारेण महीमिह समागमम् ॥ ४८५ ॥
वनस्यास्य श्रियं पश्यन्नुपेत्य रिपुभिश्छलात्।
बद्धोऽस्मि करिणीव्यग्रः करीव करिबन्धकैः ॥ ४८६ ॥
यच्छन्प्राणानतुच्छेच्छं किं तन्मे यस्य नेशिषे।
तद्ब्रूह्ययं जनः किं ते प्रियं कर्तुं प्रवर्तताम् ॥ ४८७ ॥
अवदन्नृपतिर्भ्रातः किं ममातः परं प्रियम्।
यस्त्वं विद्याधरेन्द्रत्वं कुशली पालयिष्यसि ॥ ४८८ ॥
पुनरूचे विशालाक्षः सशल्य इव लक्ष्यसे।
भद्र त्वमपि तद्ब्रूहि पुरो मम मनीषितम् ॥ ४८९ ॥
अथाकथयदुर्वीशः सर्वमाकूतमात्मनः।
आवेदिता हि सुहृदं फलन्त्येव मनोरथाः ॥ ४९० ॥
ततः प्राह विशालाक्षो नृत्यत्प्रीतिमना नृपम्।
मम वंशक्रमायाता मुद्रिका गृह्यतामियम् ॥ ४९१ ॥

असौ तव चिन्मत्क्लेशं(?)दाता सपदि कामितम् ।
देवतोपहितानां हि वस्तूनां महिमाद्भुतः ॥ ४९२ ॥
अदृश्यीकरणं वश्यीकरणं व्रणरोहणम् ।
विषनिग्रहणं चास्याः प्रथमः कुसुमोद्गमः ॥ ४९३ ॥
शतकृत्वश्च निर्णीतप्रभावेयमिति ब्रुवन् ।
पाण्डोस्तामर्पयामास बलाद्विद्याधरेश्वरः ॥ ४९४ ॥
इयं संक्रामतु प्रीतिरावयोः पुत्रसंततौ ।
स किं स्नेहो न यः पुंसां संतानमनुधावति ॥ ४९५ ॥
इत्याख्याय विशालाक्षे स्वपुरीं समुपेयुषि ।
मुद्रिकां तां धरित्रीशः पर्यधत्त निजाङ्गुलौ ॥ ४९६ ॥
दृष्टप्रतिकृतिं कुन्तीं पाण्डुश्चित्ते चकार च ।
तदात्मानमपश्यच्च तत्र यत्रास्ति सा वने ॥ ४९७ ॥
तत्र तां निभृतं धात्र्या समं विश्रम्भभाषिणीम् ।
अदृश्य एवं शुश्राव प्रजानामधिभूरिति ॥ ४९८ ॥
दूरं तयानया मातर्दुःस्थयावस्थया मम ।
कथंचिद्दिवसो यातः कथं यास्यति यामिनी ॥ ४९९ ॥
जलार्द्रया न यच्छुष्कं शुष्कमेभिश्च पङ्कजैः ।
मम निर्वर्ण्यतामेषा वपुःसंतापवर्णिका ॥ ५०० ॥
मुक्ता मुक्ताकलापस्य मुक्ताः संतापशान्तये ।
ध्यानास्फोटं स्फुटन्ति स्म पश्य मातर्ममोरसि ॥ ५०१ ॥
मृणालवलयैरेभिरभिश्चन्दनचर्चनैः ।
अलं मातरलं मातः किमु स्वं क्लेशयिष्यसि ॥ ५०२ ॥
कोरकेण समाख्यातः स शीतद्युतिशीतलः ।
मातर्मयि कथंकारमग्नेरपि विशिष्यते ॥ ५०३ ॥
निर्मन्तुमपि मां बाणैर्बाधते कुसुमायुधः ।
तिरस्कृतोऽपि रूपेण न तं हन्ति मनागपि ॥ ५०४ ॥

स्मरस्तस्मिन्नपि शरैर्निशितैः प्रहरेद्यदि ।
सुभगः सुस्थितंमन्यः स मां किं न स्मरेत्ततः ॥ ५०५ ॥
गण्डोपर्यपरो ह्येष विकटः पिटकोदयः ।
उन्निद्रश्चन्द्रिकावीचिरिन्दुर्यदयमुद्गतः ॥ ५०६ ॥
विपर्येति विपर्यस्तैर्भाग्यैर्भुवनमप्यदः ।
मम येनोत्सुकायन्ते चन्द्रस्यापि मरीचयः ॥ ५०७ ॥
हेतोः कुतोऽपि तातो मां न तस्मै दातुमीहते ।
हा हा मातर्निराशास्मि शरणं मृत्युरेव मे ॥ ५०८ ॥
ततस्तामभ्यधाद्धात्री वत्से मास्मोत्सुका भव ।
दुष्प्रापः प्राप्यते प्रेयान्कृशोदरि किमुत्सुकैः ॥ ५०९ ॥
उपायं चिन्तयिष्यामि कंचिदव्यभिचारिणम् ।
झटित्येव यदाकृष्टं द्रष्टासि पुरतः प्रियम् ॥ ५१० ॥
इत्थमाश्वास्यमानापि यादवेन्द्रसुता यदा ।
भृशं लब्धात्मलाभेन संतापेनाभ्यभूयत ॥ ५११ ॥
तदा धात्री ययौ दूरं नवपल्लवहेतवे ।
त्वरन्ते भृशमाप्ता हि स्वजनव्यसनोदये ॥ ५१२ ॥
अथान्तश्चिन्तयामास यादवेश्वरनन्दिनी ।
दृष्ट्वा निरन्तरायोऽयं समयो मम मृत्यवे ॥ ५१३ ॥
विचिन्त्येति दृढा बद्धनीविः संयमितांशुका ।
अशोकपादपस्याधः सन्नद्धोद्बन्धनाय सा ॥ ५१४ ॥
इह संनिहिताः सर्वाः शृण्वन्तु वनदेवताः ।
जन्मान्तरेऽपि भूपालः पाण्डुरेवास्तु मे पतिः ॥ ५१५ ॥
अभिधायेति शाखायाः कण्ठे पाशं व्यधात्पृथा ।
अयं प्रायः प्रतीकारः स्त्रीणां हि व्यसनोदये ॥ ५१६ ॥ (युग्मम्)
पाशालम्बितमात्मानं सा स्म यावद्विमुञ्चति ।
असिधेनुकरस्तावद्धात्रीपतिरधावत ॥ ५१७ ॥

भीष्मं च धृतराष्ट्रं च पाण्डुं च विदुरं तथा ।
दृष्ट्वामून्वर्धयामासुर्जनाः शुद्धान्तवासिनः ॥ २९ ॥
अम्बालिकाम्बिकाम्बानां सत्यवत्याश्च सत्वरम् ।
गत्वा दास्यः प्रसन्नास्याः पुत्रजन्म न्यवेदयन् ॥ ३० ॥
जातमात्रे सुते तस्मिन्बालार्कसमतेजसि ।
उच्चचार वियत्युच्चैरशरीरा सरस्वती ॥ ३१ ॥
असौ सत्यवतां मुख्यः सतामग्र्यः समग्रधीः ।
शौण्डीर्यस्थैर्यगाम्भीर्यवसतिर्विनयी नयी ॥ ३२ ॥
धर्मबद्धरतिर्भूपः सार्वभौमो भविष्यति ।
वार्द्धके व्रतमादाय निर्वाणं च गमिष्यति ॥ ३३ ॥
तत्समाकर्णनात्त स्युर्भीष्मादीनां मुदः कथम् ।
अपरेषामपि तदा हर्षं नाख्यातुमीश्महे ॥ ३४ ॥
स्वयमेव पुरे पौरैरुत्सवो निर्मितस्तदा ।
आदेशस्तु विशांपत्युरभवत्सिद्धसाधनम् ॥ ३५ ॥
निःशेषदिविषद्वर्गप्रमोदपिशुनास्तदा ।
समाकर्ण्यत सानन्ददुन्दुभिध्वनयो दिवि ॥ ३६ ॥
सुतस्य तस्य भीष्माद्यैः किंचिद्वीक्ष्याङ्गलक्षणैः ।
युधिष्ठिर इति श्लाघ्यमन्वर्थं नाम निर्ममे ॥ ३७ ॥
तपोधर्मैकनिष्ठायाः पृथाया जात इत्यसौ ।
लेभे नाम्ना तपःसूनुर्धर्मसूनुरिति क्षितौ ॥ ३८ ॥
तस्य पश्चादजातारिरिति त्रैलोक्यविश्रुतम् ।
तेन तेनावदातेन नामधेयमजायत ॥ ३९ ॥
समाजग्मुर्महीपालैः प्रहितानि सहस्रशः ।
प्राभृतानि सहस्राणि पाण्डोरात्मजजन्मनि ॥ ४० ॥
उपायनमुपादाय कुन्त्याः पितृगृहादपि ।
आययौ विकसद्रोमकोरकः कोरकस्तदा ॥ ४१ ॥

गौरवार्हविशेषेण तं पाण्डुपृथिवीपतिः ।
सत्कृत्य कृत्यनिष्णातः स्नेहसारमवार्तयत् ॥ ४२ ॥
महीतलमिलन्मौलिमाश्वास्य विहितानतिम् ।
कुन्ती नितान्तवात्सल्यात्पृच्छति स्मेति कोरकम् ॥ ४३ ॥
श्वश्रूभिः सकृदप्यसि न विसृष्टा पितुर्गृहे ।
तद्ब्रूहि कुशलं कच्चिद्बन्धुवर्गस्य मेऽधुना ॥ ४४ ॥
बन्धुसंतानवृध्द्या च मामानन्दय संप्रति ।
इति पृष्टोऽभवद्धृष्टो व्याकरोति स्म कोरकः ॥ ४५ ॥
श्रूयतां देवि साम्राज्यं देवेनान्धकवृष्णिना ।
समुद्रविजये न्यस्य प्रव्रज्या स्वयमाददे ॥ ४६ ॥
भोजवृष्णेश्च तनयो मथुराराज्यमूर्जितम् ।
उग्रसेनः करोतीति प्रागपि ज्ञातवत्यसि ॥ ४७ ॥
ततःप्रभृति मे स्वामी समुद्रविजयोऽनुजान् ।
आत्मनोऽप्यधिकं पश्यन्नपात्सौर्यपुरं प्रजाः ॥ ४८ ॥
पूर्वोपार्जितसौभाग्यः स्वच्छन्दं व्यचरत्पुरे ।
वसुदेवकुमारस्तु रेमे बन्धुप्रसादतः ॥ ४९ ॥
अन्यदा वसुदेवस्य तत्रत्यः पुत्रमात्मनः ।
वणिक् सुभद्रं कंसाख्यमर्पयामास सेवकम् ॥ ५० ॥
तथा कलाभिस्तेनापि कुमारः पर्यचर्यत ।
समानमात्मनो मेने स यथा तमहर्निशम् ॥ ५१ ॥
अस्ति चात्र जरासंधो राजा राजगृहे पुरे ।
स्वैरं क्रीडति यस्याज्ञा त्रिखण्डक्षितिमण्डले ॥ ५२ ॥
विसृज्य दूतमेतेन भूमण्डलबिडौजसा ।
अकस्मात्स्वामिनोऽस्माकमादिष्टमिदमन्यदा ॥ ५३ ॥
अस्ति निर्व्याजशौण्डीर्यसिंहः सिंहपुरे पुरे ।
नृपः सिंहरथो नाम स चाज्ञां नो न मन्यते ॥ ५४ ॥

जीवग्राहं गृहीत्वासुं बद्ध्वा पाप्मानमानय ।
आनीते तव दास्यामि स्वां जीवयशसं सुताम् ॥ ५५ ॥
रुचिरं पुरमेकं च काञ्चनाञ्चितमन्दिरम् ।
ततो विसृज्य तं दूतं प्रतस्थेऽस्मत्प्रभुः स्वयम् ॥ ५६ ॥
युग्मम् ।
प्रणम्य वसुदेवोऽथ ज्येष्ठबन्धुं व्यजिज्ञपत् ।
किमिदं देव सिंहस्य चपेटोत्पाटनं मृगे ॥ ५७ ॥
सति मय्यपि भृत्ये च स्वयं कोऽयमुपक्रमः ।
अरुणे प्रगुणे ध्वान्तं न ह्यपाकुरुते रविः ॥ ५८ ॥
एवमाबद्धनिर्बन्धं बान्धवं लघुमात्मवत् ।
वरूथिन्यामवस्थाप्य जयाय व्यसृजन्नृपः ॥ ५९ ॥
सोऽपि शौर्यावतंसेन कंसेन सह जग्मिवान् ।
बद्ध्वा सिंहरथं बन्धोर्दिनैरल्पैरुपानयत् ॥ ६० ॥
कृत्वा जयोत्सवं जातं मुदा राजगृहं नृपम् ।
क्रोष्टुकिः समभाषिष्ट ज्ञानी रहसि सानुजम् ॥ ६१ ॥
येयं जरासन्धसुता कर्मण्यत्र पणीकृता ।
क्षयकृल्लक्षणैरेषा पितृश्वशुरपक्षयोः ॥ ६२ ॥
इत्यूचिवांसं विद्वांसं तं विसृज्य प्रजेश्वरः ।
ऊचे कुमारमारम्भः शुभोदर्कोऽस्ति नैष नः ॥ ६३ ॥
ततो व्यज्ञपयद्राज्ञो वसुदेवः कृताञ्जलिः ।
सा स्यात्कन्या यथान्यस्य तथोपायोऽस्ति मे स्मृतः ॥ ६४ ॥
सावधानोऽधुना देवः श्रोतुमेतं प्रसीदतु ।
इतो युष्माकमादेशादस्मि सिंहपुरे गतः ॥ ६५ ॥
कन्दरादिव निर्गत्य सिंहः सिंहरथः पुरात् ।
भटान्नस्त्रासयामास बलाद्दन्तावलानिव ॥ ६६ ॥
ममाप्यत्यद्भुतैस्तैस्तैर्भुजविक्रमवैभवैः ।
तेन प्रादुरभाव्यन्त भाले घर्मजलोर्मयः ॥ ६७ ॥

प्रसादपात्रं पीनांसः **कंसाख्यो** मम सारथिः ।
भङ्गुरं बलमालोक्य रथात्तूर्णमवातरत् ॥ ६८ ॥
रथं **सिंहरथस्यासौ** जितशत्रुपराक्रमः ।
भुजदम्भोलिना भूभृद्गर्वचौरमचूर्णयत् ॥ ६९ ॥
मयूरबन्धनं बद्ध्वा ततः **सिंहरथो** रथी ।
मन्मानसैकहंसेन **कंसेनाक्षेपि** मे पुरः ॥ ७० ॥
ततो विषस्वसुस्तस्या दुहितुर्मगधेशितुः ।
असौ **सिंहरथानेता** परिणेतास्तु संप्रति ॥ ७१ ॥
उवाच **श्रीसमुद्रोऽथ समुद्रविजयो** वचः ।
गतापायसुपायं मे मनोहरमुदाहर ॥ ७२ ॥
परं पुरा वणिक्पुत्रस्त्वयासौ प्रतिपादितः ।
तदस्मै वणिजे पुत्रीं **जरासन्धो** न दास्यति ॥ ७३ ॥
इति जल्पत एवास्य **कंसः** सेवार्थमागमत् ।
वसुदेवश्च तं राज्ञे **कंसोऽसावित्यचीकथत्** ॥ ७४ ॥
तेजः साक्षादिव क्षात्रं तमूर्जस्विभुजार्गलम् ।
प्रांशुमांसलमालोक्य नृपतिः पुनरभ्यधात् ॥ ७५ ॥
इत्यद्भुतोऽयमाकारः सुलभो न वणिक्कुले ।
ततोऽस्य पितरं पृष्ट्वा क्रियते कुलनिर्णयः ॥ ७६ ॥
अथाहूय महीभर्त्रा पृष्टः शपथपूर्वकम् ।
**सुभद्रः** सत्यमाचख्यौ सर्वं **कंसस्य** पश्यतः ॥ ७७ ॥
यमुनायामनुस्रोतो वहन्तीमहमेकदा ।
अपश्यं कांस्यमञ्जूषां प्रातः शौचार्थमीयिवान् ॥ ७८ ॥
आदाय तामथोत्पाट्य पार्वणेन्दुसमाननम् ।
उच्छृङ्खलप्रभाजालमिममालोकयं सुतम् ॥ ७९ ॥
**उग्रसेनस्य** नामाङ्कामेतां च मणिमुद्रिकाम् ।
एतच्च पत्रमत्रेदं लिखितं वाच्यते यथा ॥ ८० ॥
युग्मम् ।

उग्रसेनसधर्मिण्या धारिण्या गर्भकर्तृकः ।
अभवद्दोहदो भर्तृमांसभक्षणलक्षणः ॥ ८१ ॥
कथंचित्पूरिते तस्मिन्नमात्यैर्मतिशालिभिः ।
पौषे कृष्णचतुर्दश्यां विष्टौ सूनुरजायत ॥ ८२ ॥
तं दोहदानुभावेन निर्णीय जनकद्विपम् ।
विन्यस्य कांस्यपेटायामुद्भटाकारधारिणम् ॥ ८३ ॥
मातापि तदहं जातं मथुरातोऽथ धारिणि ।
पत्युः क्षेमाय चिक्षेप गम्भीरे यमुनाम्भसि ॥ ८४ ॥
युग्मम् ।
इति पत्रार्थतो देव ज्ञातोऽसावुग्रसेनजः ।
पुत्रस्नेहस्तथाप्यत्र तदा प्रादुरभून्मम ॥ ८५ ॥
अथानीय निजं गेहमस्योत्सवपुरःसरम् ।
कांस्यपेटोपलब्धत्वान्नाम कंस इति व्यधाम् ॥ ८६ ॥
असावपुण्याद्वर्धिष्णुस्तेजः क्षत्रकुलोचितम् ।
ततः क्रीडन्बलादेष बालकैः कलहायते ॥ ८७ ॥
जनेभ्योऽहमुपालम्भं लेभे च प्रतिवासरम् ।
कुमारवसुदेवस्य ततोऽमुं सेवकं व्यधाम् ॥ ८८ ॥
ततो जगाद सानन्दं समुद्रविजयो नृपः ।
असद्गोत्रादृते कस्य दृश्यते बलमीदृशम् ॥ ८९ ॥
इत्युक्त्वा सह कंसेन गत्वा राजगृहे च सः ।
चक्रे सिंहपुराधीशमुपदां मगधेशितुः ॥ ९० ॥
अस्यायमवदातस्य कंसः कर्तेति सादरम् ।
नृपो निवेदयामास मगधानां महीभुजे ॥ ९१ ॥
ततः प्रीत्या ददौ पुत्रीं कंसाय मगधेश्वरः ।
प्रतिपन्नं युगान्तेऽपि नान्यथा हि महात्मनाम् ॥ ९२ ॥
उग्रसेननृपद्वेषान्मथुरामेव सादरम् ।
कंसाय याचमानाय स दत्ते स्म प्रसादतः ॥ ९३ ॥

अथ **सिंहरथो**ऽप्युच्चैरुत्खातः प्रतिरोपितः ।
नत्वा प्रसादयामास तं फलैः कलभो यथा ॥ ९४ ॥
**जरासन्धेन** सत्कृत्य विसृष्टाः स्वपुरं प्रति ।
जग्मुस्तिग्मेन वेगेन **समुद्रविजया**दयः ॥ ९५ ॥
**सत्यसन्धजरासन्ध**समर्पितबलो बली ।
**कंसस्तु मथुरां** गत्वा तातं निष्करुणोऽरुधत् ॥ ९६ ॥
सेनाभि**रुग्रसेनो**ऽपि तेन सार्धमयुध्यत ।
अखिद्यत जयश्रीस्तु तयोर्युद्धे गतागतैः ॥ ९७ ॥
कथंचनापि निर्जित्य **कंसः** क्रूरशिरोमणिः ।
साक्षेपचेताश्चिक्षेप पितरं काष्ठपञ्जरे ॥ ९८ ॥
दृढं निगडबद्धोऽपि ज्ञाते तस्मिन्निजात्मजे ।
सुतेन विजितोऽस्मीति पिता तु मुदमावहत् ॥ ९९ ॥
**सुभद्र**वणिजं **सौर्यपुरा**दानाय्य सोऽञ्जसा ।
कृतज्ञमानी संपूज्य पर्युपास्ते स्म तातवत् ॥ १०० ॥
इतश्च केलिशैलेषु प्रासादेषु वनेष्वपि ।
शौरिः **शौर्यपुरे**ऽत्यन्तं विजहार यदृच्छया ॥ १०१ ॥
**वसुदेवः** सुनेत्राणां नेत्राणाममृताञ्जनम् ।
मनसस्तु सदा ध्येयो मन्त्रोऽभूच्चतुरक्षरः ॥ १०२ ॥
**समुद्रविजयः** पौरैरेत्य विज्ञापितोऽन्यदा ।
देव त्वयापि नाथेन वयमत्यन्तदुःखिताः ॥ १०३ ॥
कन्दर्पस्य सरूपेण रूपेणाक्षिप्तचेतसः ।
शौरिमेवानुधावन्ति त्यक्त्वा वेश्मानि नः स्त्रियः ॥ १०४ ॥
अनुगासुकतां शौरेस्तासु प्राप्तासु सर्वतः ।
कलत्रकर्तृका कापि शुश्रूषा नास्ति नः प्रभो ॥ १०५ ॥
अथ पृथ्वीपतिः प्रीत्या सान्त्वयित्वा विसृज्य तान् ।
**वसुदेवं** समाहूय रहस्येवं समादिशत् ॥ १०६ ॥

वत्स स्वच्छन्दचर्याभिरभूरत्यन्तदुर्बलः ।
कुरु सर्वकलाभ्यासं सौधमध्यस्थ एव तत् ॥ १०७ ॥
कुर्वन्नुर्वीपतेराज्ञामेवं राजानुजोऽन्यदा ।
एकामपश्यदायान्तीं दासीमन्तःपुरोदरात् ॥ १०८ ॥
विलेपनं करात्तस्याः सोऽलुम्पन्नर्मलीलया ।
ततः सकोपं साक्षेपं वसुदेवं जगाद सा ॥ १०९ ॥
कुमारमेदुरामोदमङ्गरागं किमाच्छिदः ।
देवाय शिवया देव्या प्रेमतः प्रहितो ह्यसौ ॥ ११० ॥
सौधमध्ये निरुद्धोऽसि स्थाम्ना देवेन धीमता ।
विशत्यविनयादेव पञ्जरे सिंहशावकः ॥ १११ ॥
साथ पृष्टा कुमारेण निजसंरोधकारणम् ।
तत्पुरे पौरवृत्तान्तं सर्वं मूलादचीकथत् ॥ ११२ ॥
ततो म्लानमुखाब्जश्रीर्व्यतीत्य कथमप्यहः ।
वसुदेवो विभावर्यामेकाक्येव क्वचिद्ययौ ॥ ११३ ॥
प्रातरन्वेषणे पूर्वप्रतोलीद्वारि दूरतः ।
दग्धमानुषसंस्थानो भस्मराशिरदृश्यत ॥ ११४ ॥
प्रतोल्यां लम्बमानं च पत्रमेकमुदैक्षत ।
शुचोच्चैर्वाचयामास समुद्रविजयः स्वयम् ॥ ११५ ॥
पुंसो यस्य गुरून्यावदुपालम्भः प्रवर्तते ।
तस्य श्रेयस्करो मृत्युर्जीवितं तु त्रपाकरम् ॥ ११६ ॥
ततः शौरिः कृतोद्वेगो गुरूणामगुणैकभूः ।
विरचय्य चितामत्र कृशानुमविशत्स्वयम् ॥ ११७ ॥
तदेवं वाचयन्नेव देवो मूर्छामुपागमत् ।
ज्ञात्वा विपन्नं सोदर्यं को हि धैर्यं न मुञ्चति ॥ ११८ ॥
व्यलपच्चाप्तचैतन्यो हा वत्स गुरुवत्सल ।
दत्त्वा नः शोकमस्तोकमगमः कामिमां दशाम् ॥ ११९ ॥

भाग्यैकलभ्यं सौभाग्यं **वसुदेवस्य** संस्मरन् ।
राजानमनुचक्रन्द सर्वोऽपि विधुरो जनः ॥ १२० ॥
जनन्यास्तु **सुभद्रायाः** सुतशोकाशुशुक्षणिः ।
तथा नितान्तं जज्वाल प्राणानप्यहरद्यथा ॥ १२१ ॥
न गीतं गीतशालासु न लास्यं लास्यवेश्मनि ।
बभूव शौरिशोकेन न च तूर्यध्वनिः क्वचित् ॥ १२२ ॥
**वसुदेव**शुचा देवो न दिदेव शरद्यपि ।
वसन्ते च शरद्वेश्मन्यरोदीद्दीनलोचनः ॥ १२३ ॥
एवं वर्षाणि भूयांसि भूशक्रस्यातिचक्रमुः ।
एत्यान्यदा निमित्तज्ञो बभाषे **क्रोष्टुकि**र्नृपम् ॥ १२४ ॥
दृष्टादृष्टनिमित्तेन भृशं निश्चिन्वता मया ।
यज्जीवति प्रफुल्लश्री**र्वसुदेवो** निरामयः ॥ १२५ ॥
एवं तद्गिरमाकर्ण्य कर्णपीयूषसारणिम् ।
भूयोऽपि राजकार्येषु किंचित्प्रावर्तत प्रभुः ॥ १२६ ॥
स्वयंवरेऽथ **रोहिण्याः** सुताया **रुधिरा**ह्वयः ।
**अरिष्ट**नगरस्वामी स्वामिनं नः समाह्वयत् ॥ १२७ ॥
देवोऽपि बन्धुभिः सार्धं महर्धिकपरिच्छदः ।
शौरिशोकविनोदार्थं न कन्यार्थं पुनर्ययौ ॥ १२८ ॥
**जरासन्ध**महाराजप्रमुखे राजमण्डले ।
आसीने मञ्चमत्युच्चमध्युवास नृवासवः ॥ १२९ ॥
मन्मथाङ्कुररोहिण्या रोहिण्याथ कटाक्षिताः ।
भूपाः स्वं रोचयांचक्रुः स्फुटितानन चेष्टिताः ॥ १३० ॥
परं धात्रीपतिर्धात्र्या संकीर्तितगुणाश्रियाम् ।
तेषामेकोऽपि **रोहिण्या** रोचते स्म न कश्चन ॥ १३१ ॥
राज्ञोऽवज्ञाय सर्वांस्तानेकं पाटहिकं दृशा ।
ईक्षांबभूव साकाङ्क्षं सा मृगाक्षी मुहुर्मुहुः ॥ १३२ ॥

सोऽप्येवं वादयामास पटहं प्रकटाक्षरम् ।
अकालक्षेपमेणाक्षि सज्जा क्षीणीति भामिनि ॥ १३३ ॥
गुणैः कुमुदकुन्देन्दुसुन्दरैः सा वशंवदा ।
तस्य कण्ठे निचिक्षेप स्रजं कुब्जकृतेरपि ॥ १३४ ॥
कृतकोलाहलाः सर्वे धृत पाणविकाः नगाः ।
जरासन्धाज्ञया योद्धुमुपतस्थिरे नृपाः ॥ १३५ ॥
तं पाटहिकमभ्यूरीकुर्वाणं रुधिरं प्रति ।
तं पराक्रमिणश्चक्रुः कुन्ताकुन्ति शराशरि ॥ १३६ ॥
उद्बुद्धप्रबलक्रोधो रुधिरस्तानयोधयत् ।
न हि क्षुभ्यन्ति शौण्डीराः प्रत्यर्थिषु बहुष्वपि ॥ १३७ ॥
अथ प्रत्यर्थिभूपाले रुधिरे विधुरीकृते ।
तैः समं तौर्यिकस्तूर्णं समरायोदतिष्ठत ॥ १३८ ॥
नभश्चरोपनीतेन सायुधेन रथेन (?) सः ।
ते(ता)नेकोऽपि पिनष्टि स्म न वैरिनिकरायुधम् ॥ १३९ ॥
अबलं स्वबलं वीक्ष्य जरासन्धो भयातुरः ।
देवं समुद्रमादिक्षत्तस्याक्रमणहेतवे ॥ १४० ॥
तौर्यिकोऽयमिति ज्ञात्वा सावज्ञम (ज्ञं सोऽ) भ्युपेक्षयन् ।
[तेन] निलुम्पता (तेन) सैन्यं निन्ये देवोऽपि विस्मयम् ॥ १४१ ॥
रूपाद्विसदृशं तेजस्तस्य पश्यन्स्वयं ततः ।
देवः शौर्यपुराधीशः शरं धनुषि संदधे ॥ १४२ ॥
तेनापि प्रहितं देवो विनीतमिव सेवकम् ।
एवं साक्षरमद्राक्षीत्पादाग्रे पतितं शरम् ॥ १४३ ॥
कौतुकेन तमादाय व्यक्तां मुक्ताफलोपगाम् ।
तत्रोच्चैर्वाचयामास देवस्तामक्षरावलीम् ॥ १४४ ॥
शवदाहमयं छद्म कृत्वागाद्यः पुरा पुरात् ।
स ते पादाम्बुजं देव वसुदेवो नमस्यति ॥ १४५ ॥

मुक्त्वा स्यन्दनमानन्दस्यन्दमानाश्रुलोचनः ।
आगच्छ वत्स वत्सेति देवो जल्पंस्तमभ्यगात् ॥ १४६ ॥
सोऽपि स्वरूपमास्थाय रथादुत्तीर्य वेगतः ।
ववन्दे देवपादाब्जं स्नपयन्नयनाम्बुभिः ॥ १४७ ॥
गाढमालिङ्ग्य वेगेन स पुरो विनयान्वितः ।
कुत्र वर्षशतं वत्स शिष्टवानित्यपृच्छत ॥ १४८ ॥
सोऽपि व्यज्ञापयद्देव त्वत्प्रभावादयं जितः ।
कृतरूपपरावर्तः स्वैरं भ्रान्तोऽस्मि भूतले ॥ १४९ ॥
इत्थं तदा विदित्वा तं **समुद्रविजयानुजम्** ।
प्रमोदमेदुरं चेतो दधिरे रुधिरादयः ॥ १५० ॥
ततः स **रोहीणीं** रोहद्विशेषप्रेमविक्लवाम् ।
उपायंस्त सदानन्दश्चन्द्रमा इव रोहिणीम् ॥ १५१ ॥
**शौरिं** जगाद देवोऽथ वत्सागच्छ निजां पुरीम् ।
ग्रहा अपि परक्षेत्राच्छ्लाघ्याः स्वं क्षेत्रमागताः ॥ १५२ ॥
ततः **शौरि**रभाषिष्ट त्वदादिष्टं तथेति मे ।
परं स्वपुरमेष्यामि कालेन कियताप्यहम् ॥ १५३ ॥
स्नुषा वः शतशः सन्ति नरखेचरकन्यकाः ।
ततस्ताः शीघ्रमादाय प्रणन्तास्मि भवत्क्रमौ ॥ १५४ ॥
एवमापृच्छ्य निर्बन्धात्स जगामोत्तरां दिशम् ।
देवोऽपि सपरिवारः पुरमात्मीयमाययौ ॥ १५५ ॥
**शौरिः** शौर्यकथाबन्धैः समयं गमयन्मुदा ।
अश्रौषीदेकदा देवः कौबेर्यां तूर्यनिःस्वनम् ॥ १५६ ॥
दृशौ व्यापारयंस्तस्यामपश्यन्मणिनिर्मितम् ।
स्वामी श्रेणीं विमानानामभ्यायान्तीं विहायसा ॥ १५७ ॥
नभोनिभालनोत्फुल्लनयनस्य नरेशितुः ।
एत्यः **शौरिः** समेतीति कश्चिदूचे नभश्चरः ॥ १५८ ॥

प्रत्युद्गम्य ततो देवः प्रवर्तितमहोत्सवे ।
उत्तुङ्गतोरणश्रेणौ शौरिः प्राविविशत्पुरे ॥ १५९ ॥
मथुरातः समागम्य कंसः संस्मृतसौहृदः ।
शौरेश्चकार माङ्गल्यमन्यराजन्यजित्वरम् ॥ १६० ॥
अथ देवमनुज्ञाप्य चिरं शुश्रूषणेच्छया ।
विनयादनयच्छौरिं मथुरां मथुरापतिः ॥ १६१ ॥
पुत्रीं निजपितृव्यस्य देवकस्य स देवकीम् ।
सुरूपामनुरूपेण शौरिणा पर्यणाययत् ॥ १६२ ॥
कंसबन्धुर्विविक्तात्मा मुक्तिकामोऽतिमुक्तकः ।
उत्सवे तत्र भिक्षार्थी शमवान्मुनिराययौ ॥ १६३ ॥
कंसपत्नी जीवयशा यौवनोन्मादमेदुरा ।
तदानीं संमुखीनासीन्निःसीमतपसो मुनेः ॥ १६४ ॥
असौ शिथिलधम्मिल्ला मुनिं स्रस्तनांशुका ।
क्षीवा श्लथ(थी)भवन्नीवी दृश्यात्मा(श्यता)भिन्नमभ्यधात् ॥१६५॥
एहि देवर नृत्यावः स्वमुत्तत्र महोत्सवे ।
तमित्यालप्य सा दोर्भ्यां कण्ठे साग्रहमग्रहीत् ॥ १६६ ॥
अस्तारुण्यमहारण्यभल्लूकि निरपत्रपे ।
अपेहीति सतां रूक्षमधिक्षिप्योक्तवानिति ॥ १६७ ॥
यद्विवाहोत्सवे मत्ता नृत्यस्यत्यन्तगर्विता ।
तस्याः सप्तमगर्भेण तव घातिष्यते पतिः ॥ १६८ ॥
एवं वाङ्मयमन्त्रेण वित्रासितमहोदया ।
सामुञ्चच्च मुनेः कण्ठं सोऽगमच्च यथागतम् ॥ १६९ ॥
सा कंसस्य तदाचख्यौ सोऽपि क्षोभमगाद्भृशम् ।
मृत्युदौर्गत्ययोर्वार्ता न स्यात्कस्यार्तिहेतवे ॥ १७० ॥
मृत्युतो बिभ्यदन्येद्युः कंसः कौटैककोविदः ।
दाक्षिण्यस्य निधिं नीत्वा रहः शौरिमभाषयत् ॥ १७१ ॥

सदैव समयज्ञानामात्मजानामनुज्ञया ।
तयोरिष्टमपूरिष्ट समीपेऽरिष्टनेमिनः ॥ २३२ ॥
तावथासादितस्वामिप्रसादमुदिताशयौ ।
व्रताचारमधीयानौ समं तेन विजह्रतुः ॥ २३३ ॥
प्रभोः पित्रोश्च विरहे पाण्डवैरुन्मनायितम् ।
नक्तंदिवं तदादिष्टे धर्मे तु सुमनायितम् ॥ २३४ ॥
निर्माय तत्र तैश्चैत्यं स्वाम्युक्तं वा व्यनोद्यत ।
मातापित्रोर्वियोगस्तु क्लमयामास तन्मनः ॥ २३५ ॥
कृष्णा विज्ञा विशेषेण शुश्रूषामास तांस्तदा ।
प्रीतिपात्रं कलत्रं हि सर्वक्लेशापहं नृणाम् ॥ २३६ ॥
ते पञ्चेषुजिगीषायां विस्फुरत्पौरुषा अपि ।
ततस्तदेकविषयान्विषयाननुमेनिरे ॥ २३७ ॥
पर्यायेणाथ भुञ्जाना सह तैर्दयितैः सुखम् ।
गर्भं बभार पाञ्चाली निधानमिव मेदिनी ॥ २३८ ॥
अन्यतेजस्विमाहात्म्यग्रासोज्जागरतेजसम् ।
प्रातः प्राचीव मार्तण्डं सा क्रमात्सुषुवे सुतम् ॥ २३९ ॥
जगदानन्दने तस्मिन्नन्दने **धर्मनन्दनः** ।
जाते दानं ददौ किंचिच्छोधयामास चारकान् ॥ २४० ॥
नामास्य पाण्डवैः **पाण्डुसेन** इत्युज्ज्वलौजसः ।
दीनानाथजनोद्धारपुरःसरमसूच्यत ॥ २४१ ॥
**पाण्डुसेनो**ऽथ सेनानीरिव बाल्येऽपि विक्रमी ।
विज्ञः प्रज्ञावतामग्र्यो जग्राह सकलाः कलाः ॥ २४२ ॥
जगच्चेतश्चमत्कारिगुणगृह्यैः स पाण्डवैः ।
अद्भुतप्राभवप्राज्ये यौवराज्ये न्ययुज्यत ॥ २४३ ॥
सर्वतः कुर्वतां तेषां तां तामर्हत्प्रभावनाम् ।
कल्याणोदर्कराज्यानां ययौ कालः कियानपि ॥ २४४ ॥

मषीश्याममुखो जातु कराग्रोपात्तकौस्तुभः ।
युधिष्ठिरं जरासूनुरुपतस्थे सदःस्थितम् ॥ २४५ ॥
कृतसंमानमासीनं वीक्ष्य हस्तेऽस्य कौस्तुभम् ।
अदभ्रं संभ्रमं बिभ्रत्तं पप्रच्छ तपःसुतः ॥ २४६ ॥
एतदत्याहितं किं तु भ्रातरावेदय द्रुतम् ।
प्रभोश्चिरंतनीं वाचं स्मरन्नस्मि भियातुरः ॥ २४७ ॥
सत्यैव स्वामिनो वाणीत्युक्तेऽनेन विषादवान् ।
पुनः कुन्तीसुतोऽवादीद्यथावृत्तं तदादिश ॥ २४८ ॥
सोऽप्युवाच शृणु भ्रातर्यातोऽरण्यमहं तदा ।
व्याधवृत्तिश्चिरं स्थित्वा जातु बाणं मृगेऽक्षिपम् ॥ २४९ ॥
अथादित्सुः शरं गच्छन्नहमन्तरितो द्रुमैः ।
अहो कोऽयमनागस्कं सुखसुप्तमनालपन् ॥ २५० ॥
बाणेनाङ्घ्रितले बाढं निर्घृणो निजघान माम् ।
मया तु जातु नाज्ञातनामगोत्रो हतः परः ॥ २५१ ॥
वेगादेष तदाख्यातु नामगोत्रे निजे मम ।
येनाहमपि नाराचं तं प्रति प्रतिसंदधे ॥ २५२ ॥
श्रुत्वेति कस्यचिद्वाचं धीरोदात्तां महात्मनः ।
नैणोऽयमिति निश्चिन्वन्खेदमासादयं परम् ॥ २५३ ॥
(चतुर्भिः कलापकम्)

दशमस्य दशार्हस्य सूनुरानकदुन्दुभेः ।
नाम्ना जराकुमारोऽस्मि जरादेव्यास्तनूद्भवः ॥ २५४ ॥
निर्मानुषे वसाम्यत्र वने केनापि हेतुना ।
कोऽसि त्वं पुनरित्युच्चैर्दूरस्थितमवादिषम् ॥ २५५ ॥
ततः सोऽवददेह्येहि ज्यायोभ्रातरहं हरिः ।
स एवास्ति प्रयत्नस्ते विफलः सकलोऽभवत् ॥ २५६ ॥
तं दृष्ट्वा वाणिजेनेव दत्तं शुल्कमिदं त्वया ।
इति शृण्वन्नवन्नस्तस्य समीपं प्राप साकुलः ॥ २५७ ॥

कृष्णमालोक्य चामूर्च्छमपृच्छं चात्तचेतनः ।
कथमेतदभूद्वा ते तदा द्वैपायने वनम्(ने) ॥ २५८ ॥
अचीकथत्ततः कृष्णः प्रभुवाक्यादनन्तरम् ।
पौरैः समुज्झिते मद्ये षण्मासाः प्रययुः सुखम् ॥ २५९ ॥
आयाते मासि वैशाखे कदम्बवनपालकः ।
सभायामायतिप्रेक्षी मामुपेत्य व्यजिज्ञपत् ॥ २६० ॥
तत्र त्यक्तं तदा देव द्रुमपुष्पाधिवासितम् ।
उपागतेन सुस्वादु मद्यं तत्पीतपूर्विणा ॥ २६१ ॥
केनापि सुहृदा साम्बः प्राभृतीकृत्य पायितः ।
कुमारैः सह दुर्दान्तैर्गृह्णंस्तद्वनमाययौ ॥ २६२ ॥
ते तत्रापानमाबध्य तां सुरां स्वैरमापपुः ।
क्षणेन क्षीबतां प्राप्य विचेलुश्च यदृच्छया ॥ २६३ ॥
तत्रैकान्ते तपस्यन्तमन्तकं पापकर्मणाम् ।
द्वैपायनपरिव्राजं ते निध्याय दधुः क्रुधम् ॥ २६४ ॥
हन्यतामधुना चायं दुरात्मा मुनिपांसनः ।
व्यापादितः कथं नाम दग्धुमीशिष्यते पुरीम् ॥ २६५ ॥
इति साम्बगिरा लेष्टुचपेटायष्टिमुष्टिभिः ।
हत्वा हत्वा मृतप्रायं तं व्यधुर्भवदात्मजाः ॥ २६६ ॥
मृतोऽयमिति मूर्च्छालं तं त्यक्त्वा गृहमाययुः ।
मूर्च्छाविरामे सामर्षं तं च वीक्ष्येहमागमम् ॥ २६७ ॥
इत्याख्याय स्थिते तस्मिन्ननर्थो मास्मभूदितः ।
इत्यागच्छं सरामोऽहं सान्त्वनाय मुनेर्वनम् ॥ २६८ ॥
कोपाटोपकडाराक्षमद्राक्षं तत्र तं मुनिम् ।
करौ च कुड्मलीकृत्य सप्रश्रयमवादिषम् ॥ २६९ ॥
दुस्तपं ते तपः क्वेदं मुने क्रोपः क्व चेदृशः ।
कथमेकत्र संवासस्तेजस्तिमिरयोरयम् ॥ २७० ॥

मुहुः सिक्तं शमाम्भोभिः फलितं मुक्तिसंपदा।
तपोबीजमखण्डं ते क्रोधवह्निर्दहत्ययम्॥ २७१॥
अज्ञानैर्मद्यपानाद्यैर्डिम्भरूपैर्महामुने
अपराद्धमिदं यत्ते तदद्य क्षन्तुमर्हसि॥ २७२॥
अथावादीन्मुनिर्विष्णो पर्याप्तं तव सान्त्वनैः।
अधुनैव क्रुधा येन निदानं विदधे मया॥ २७३॥
द्वारकाया यदूनां च क्षयाय स्यामतो हरे।
सर्वस्य प्रलयो भावी लोकस्यास्य युवां विना॥ २७४॥
पुनः प्रसादनायास्य साभिलाषं विलोक्य माम्।
न्यषेधल्लाङ्गली विष्णो कृतमेतस्य सान्त्वनैः॥ २७५॥
वक्राङ्घ्रिनासिकाहस्ताः स्थूलोष्ठोदरनासिकाः।
हीनाङ्गविषमाक्षाश्च शान्तिं यान्ति न जातुचित्॥ २७६॥
ततः प्रेङ्खन्मनःखेदे मयि हर्म्यमुपेयुषि।
द्वैपायननिदानार्थः सर्वोऽपि पुरि पप्रथे॥ २७७॥
स्वभावतो ममादेशादुपदेशादपि प्रभोः।
बभूव धर्मकर्मैकसज्जो द्वारवतीजनः॥ २७८॥
तदा कृपालुः कालज्ञः समेत्य भगवानपि।
पितरौ स्वौ कुमारांश्च प्रद्युम्नादीनदीक्षयत्॥ २७९॥
रुक्मिणीप्रमुखाः स्वामी मदीया महिषीरपि।
प्राव्राजयदनेकं च द्वारकालोकमाकुलम्॥ २८०॥
वत्सरे द्वादशेऽवश्यंभाविनं द्वारकाक्षयम्।
पृष्टः पुनर्ममादिश्य विजह्रे प्रभुरन्यतः॥ २८१॥
शश्वच्चतुर्थषष्ठादितपोनिष्ठैकचेतसः।
जनस्यैकादशाब्दानि निर्विघ्नं व्यतिचक्रमुः॥ २८२॥
ततश्च द्वादशे वर्षे व्यतीयुषि कियत्यपि।
जितोऽस्मत्तपसा नष्टो द्वैपायनमुनिर्ध्रुवम्॥ २८३॥

एवं निश्चित्य पूर्लोकः प्रमादं मदिरादिकम् ।
निस्तन्द्रः पुनराददे दुर्लङ्घ्या भवितव्यता ॥ २८४ ॥(युग्मम्)
अथोत्पातमहीकम्पनिर्घातोल्कादयोऽभवन् ।
ग्रहेभ्यो निर्ययौ धूमः कृशानुश्च विवस्वतः ॥ २८५ ॥
ननृतुश्चित्ररूपाणि जहसुः शालभञ्जिकाः ।
अकाले राहुणा ग्रासः सूर्याचन्द्रमसोरभूत् ॥ २८६ ॥
अकल्याणफलाः स्वप्ना जनैर्ददृशिरे निशि ।
अनशन्कापि रत्नानि चक्रादीनि ममापि च ॥ २८७ ॥
ततः संवर्तको वातः प्रावर्तत समन्ततः ।
स निचिक्षेप पर्यन्तदूरादुन्मूल्य पादपान् ॥ २८८ ॥
अन्तर्धा सप्ततिः षष्टिर्बहिश्च कुलकोटयः ।
अपिण्ड्यन्त भयान्नष्टा अप्युपानीय केनचित् ॥ २८९ ॥
मयि पश्यति रामे च वह्निमहाय कश्चन ।
दारुणो दारुपूर्णायां द्वारकायामदीपयत् ॥ २९० ॥
अहं शोकान्धकारेण धूमस्तोमेन चाम्बरम् ।
युगपत्परितः प्रासव्यासेन व्यानशेतमाम् ॥ २९१ ॥
अभ्रंलिहाभिर्ज्वालाभिर्धूमोऽथ निरधूयत ।
मम शोकान्धकारस्तु कामं वृद्धिमनीयत ॥ २९२ ॥
अथाहं वसुदेवं च देवकीं चाथ रोहिणीम् ।
आरोप्य रथमाक्रष्टुं प्रवृत्तः सहसारिणा ॥ २९३ ॥
नाश्वैर्न वृषभैः किंचिद्रथं क्रष्टुमशक्यत ।
आवां युगार्पितस्कन्धौ ततोऽभूव धुरंधरौ ॥ २९४ ॥
अभञ्जि द्रुतमक्षाभ्यां सद्योऽभाजि युगेन च ।
रथः कथंचिदावाभ्यां निन्ये तदपि गोपुरम् ॥ २९५ ॥
अथ क्षणाददीयेतां कपाटौ तत्र केनचित् ।
रामेणाङ्घ्रिप्रहारेण व्यघट्येतां च वेगतः ॥ २९६ ॥

महीमग्नो रथः किंचिदस्मत्कृष्टोऽपि नाचलत् ।
क्लीबः पित्रोरपि त्राणे व्यषीदं पौरुषे ततः ॥ २९७ ॥
विषादिनं तदानीं मां देवः कश्चिद्दिवि स्थितः ।
उच्चैरुवाच भोः कृष्ण कृतं तव परिश्रमैः ॥ २९८ ॥
यस्मादस्मि स एवाहं द्वीपायनवरः सुरः ।
उत्पन्नोऽग्निकुमारेषु स्मृत्वा वैरं करोम्यदः ॥ २९९ ॥
किंत्वेकादशवर्षाणि परमोत्कर्षचञ्चुना ।
जनानामप्रमादेन नावकाशो ममाभवत् ॥ ३०० ॥
तदहो दहनेनैव मन्निदानभुवामुना ।
असावानेष्यते मृत्युं मातापितृजनस्तव ॥ ३०१ ॥
यदभावि न तद्भावि भावि चेन्न तदन्यथा ।
तद्गच्छत पुराख्यातं मास्म विस्मरतं मम ॥ ३०२ ॥
इति श्रुत्वापि तद्वाचमाकर्षन्तौ रथं पुनः ।
भृशमावामभाषन्त पितरः स्नेहकातराः ॥ ३०३ ॥
वत्सौ वात्सल्यमस्मासु स्वोचितं चक्रथुर्युवाम् ।
अवश्यं भाविनो भावाः किंतु स्युर्महतामपि ॥ ३०४ ॥
ततोऽस्तु वां शिवः पन्था विजयेथां चिरं युवाम् ।
अस्माभिः पुनरत्रैव नेमिः शरणमाश्रितः ॥ ३०५ ॥
यद्बद्धं मनसास्माभिर्वचसा यच्च भाषितम् ।
कृतं यच्चापि कायेन तन्मे मिथ्यास्तु दुष्कृतम् ॥ ३०६ ॥
क्षमयामोऽखिलान्सर्वान्सर्वे क्षाम्यन्तु तेऽपि नः ।
मैत्री सर्वेषु भूतेषु वैरमस्ति न केनचित् ॥ ३०७ ॥
अशनादिकमाहारं प्रत्याख्यामश्चतुर्विधम् ।
अर्हदादींश्च पञ्चापि स्मरामः परमेष्ठिनः ॥ ३०८ ॥
वयं कस्यापि नेदानीमस्मदीयो न कश्चन ।
इत्युन्मदिष्णुनिर्वेदमात्मानमनुशास्महे ॥ ३०९ ॥

इत्याहारपरीहारतत्परैः पितृभिः पुनः ।
विसृष्टौ वलितग्रीवौ व्रजावः स्म कथंचन ॥ ३१० ॥
तदैव देवापसदस्तानधाक्षीत्क्षणेन सः ।
तेऽपि त्रिदिवमासेदुर्ध्रुवं तद्ध्यानढौकिताः ॥ ३११ ॥
जरासन्धवधाख्यानसदुपाध्याय पश्यति ।
नाथे त्वय्यप्यसह्येन दाहं दह्यामहेऽग्निना ॥ ३१२ ॥
इत्थमुत्थास्नुभिर्दीनैः प्रलापैः पुरवासिनाम् ।
दीर्णकर्णः सरामोऽहं जीर्णाराममुपागमम् ॥ ३१३ ॥ (युग्मम्)
भवन्तीं भस्मसाद्वीक्ष्य द्वारकां रङ्कवत्पुरः ।
तत्र स्थितं विषण्णात्मा संकर्षणमवादिषम् ॥ ३१४ ॥
आर्य पुर्याः क सा लक्ष्मीः क च दाहो महानयम् ।
क शौण्डीर्यमवार्यं तत्कचेयं क्लीबता मम ॥ ३१५ ॥
आर्य किंकार्यतामूढः प्रौढापत्पतितस्ततः ।
किं करोमि क गच्छामि राजचक्रे विरोधिनि ॥ ३१६ ॥
सीरपाणिरथाभाणीत्कृष्ण मा खेदमाकृथाः ।
प्रभुव्याख्यातमश्रौषीः किं न संसारनाटकम् ॥ ३१७ ॥
अत्र कर्मपरीणामः सूत्रधारो निरर्गलः ।
प्राणिनो नाट्यपात्राणि नानानेपथ्यधारिणः ॥ ३१८ ॥
स खलूच्छृङ्खलोत्साहः स्वमतार्पितभूमिकः ।
हर्षशोकादिभिर्भावैरिवार्तैर्नर्तयत्यमून् ॥ ३१९ ॥
भवनाट्ये ततोऽनेन सूत्रधारेण सूत्रिता ।
संस्था सर्वापि पात्राणां तद्विष्णो मा स्म खिद्यथाः ॥ ३२० ॥
गन्तव्यं पुनरावाभ्यां पाण्डवेयान्तिकेऽधुना ।
ते स्मरन्त्युपकारं नो नापकारं तु जातुचित् ॥ ३२१ ॥
अपकारेऽपि सौजन्यं सुजनो न विमुञ्चति ।
जहाति दह्यमानोऽपि घनसारो न सौरभम् ॥ ३२२ ॥

ततः प्रचलितावावां पाण्डवानां पुरीं प्रति ।
हस्तिकल्पपुरोद्यानमागमाव श्रमार्दितौ ॥ ३२३ ॥
क्षुत्क्षामं वीक्ष्य मां रामो भोजनानयनेच्छया ।
वेगात्तस्य पुरस्यान्तः प्रस्थितोऽभिदधे मया ॥ ३२४ ॥
अच्छदन्ताभिधानोऽत्र धृतराष्ट्रात्मजो नृपः ।
स च पाण्डवगृह्येण मया वैरायते भृशम् ॥ ३२५ ॥
अनार्योऽयं किमप्यार्य चेद्वैरोचितमाचरेत् ।
विदधीथास्ततः क्ष्वेडामापतेयमहं यथा ॥ ३२६ ॥
तत्प्रतिश्रुत्य रामेऽथ पुरीमध्यमुपेयुषि ।
मम क्षणान्तरे क्ष्वेडा कर्णमूलमुपागमत् ॥ ३२७ ॥
ततः क्रोधकरालोऽहमत्युत्तालमधाविषम् ।
पिहितां च पदाहत्य प्रतोलीमुदघाटयम् ॥ ३२८ ॥
भिन्दन्तमच्छदन्तस्य चतुरङ्गां वरूथिनीम् ।
अद्राक्षं कुञ्जरालानस्तम्भपाणिं च सीरिणम् ॥ ३२९ ॥
पुरीपरिघमादाय धार्तराष्ट्रमवादिषम् ।
दुरात्मन्नागमं सोऽहं कौरवान्तकरो हरिः ॥ ३३० ॥
ततः परिघमालोक्य प्रणतो मृत्युकातरः ।
बद्धाञ्जलिरजल्पन्मां स सुयोधनबान्धवः ॥ ३३१ ॥
किमाक्रम्य कुरङ्गाणां दुःस्थावस्थोऽपि केसरी ।
देव स्वसेवकस्यास्य तदागः क्षम्यतामिदम् ॥ ३३२ ॥
तं मुक्त्वाथ प्रसादेन पुनस्तद्वनमागमम् ।
नानामनोहराहारपाणिना सीरिणा समम् ॥ ३३३ ॥
रामस्तत्र मयाप्रच्छि लब्धं भोज्यमिदं कथम् ।
आयातोऽसि कथं चास्य दृक्पथे परिपन्थिनः ॥ ३३४ ॥
रामेणाख्यायि गोविन्द कन्दुकाद्भोज्यमद्भुतम् ।
सुवर्णकटकक्रीतमानयन्तमिदं पथि ॥ ३३५ ॥

कथंचिद् ज्ञातवृत्तान्तः कृतान्त इव भीषणः ।
सैन्योदन्वानरौत्सीन्मामच्छदन्तो न्यधादपि ॥३३६॥ (युग्मम्)
कुत्राहो रोहिणीसूनो यासि पाण्डवबान्धव ।
गृहाणायुधमाधेहि पुनरायोधने मनः ॥ ३३७ ॥
विमुच्य भोज्यपात्राणि ततः क्ष्वेडायितोद्धतः ।
स्तम्भेन दलयन्वैरिबलं दृष्टस्त्वयाप्यहम् ॥ ३३८ ॥
अथावां विहिताहारौ ततः प्रचलितौ क्रमात् ।
उपागावदुरापाम्बु कौशाम्बं नाम काननम् ॥ ३३९ ॥
पुंनागपादपस्यास्य छायामायातवानहम् ।
तृषार्दितः पयःपानं श्रान्तो राममयाचिषम् ॥ ३४० ॥
सोपद्रवे वनेऽमुष्मिन्कृष्ण मा भूः प्रमद्वरः ।
आगतो द्रुतमेषोऽहमिति व्याहृत्य मां मुहुः ॥ ३४१ ॥
विनियुज्य च साहाय्ये ममेह वनदेवताः ।
इतो जगाम रामोऽथ निर्विलम्बमवेक्षितुम् ॥ ३४२ ॥(युग्मम्)
अहं तु प्रावृतक्षौमेणाङ्घ्रिमारोप्य जानुनि ।
अस्वपं श्रमसुप्रापनिद्रोऽत्रैव तरोस्तले ॥ ३४३ ॥
ततो विद्धोऽस्मि कस्माच्चिद्धमात्पादतले त्वया ।
इयं तव जरासूनो कथिता मूलतः कथा ॥ ३४४ ॥
श्रुत्वा विष्णुमुखादेवं द्वारकादाहवैशसम् ।
इत्यशोचं चिरं दुःखाद्दैवोपालम्भपूर्वकम् ॥ ३४५ ॥
रे दुर्विधेय वैधेय विधे विविधकौतुकाम् ।
एवंविधां विधायैतामधाक्षीरधुना कथम् ॥ ३४६ ॥
दग्धौ हन्त हुताशेन हा मातापितरौ मम ।
मामकीनाः क्व ते नाम बन्धवः स्नेहबन्धुराः ॥ ३४७ ॥
जितवासवसाम्राज्यं राज्यं हारि हरेः क्व तत् ।
क्व चास्येत्थमवस्थानं तले सिकतिले तरोः ॥ ३४८ ॥

हा तत्राप्यस्य कुत्रेदं मया बाणेन ताडनम् ।
धिङ् मां हन्त सुखासुप्तभ्रातृहत्यामलीमसम् ॥ ३४९ ॥
शोचन्तमिति मामूचे वात्सल्यादुत्सुको हरिः ।
अलमेभिर्विलापैस्ते भव कार्यकरोऽधुना ॥ ३५० ॥
इत ऊर्ध्वं मुहूर्तेन मृत्युर्भावी मम ध्रुवम् ।
तदिदानीं स्मरिष्यामि श्रीनेमिपदपङ्कजम् ॥ ३५१ ॥
तत्त्वं कौस्तुभमादाय जवेन व्रज पाण्डवान् ।
अन्यथा मन्थितावश्यमायातस्त्वां बलो बली ॥ ३५२ ॥
कियन्तमपि पन्थानं यायाः पश्चान्मुखैः पदैः ।
यथा संकर्षणो रोषान्न स्यादनुपदी तव ॥ ३५३ ॥
मर्माविधमथोद्धृत्य हरेरङ्घ्रितलाच्छरम् ।
कौस्तुभं च करे कृत्वा धर्मजन्मन्निहागमम् ॥ ३५४ ॥
इत्याकर्ण्य जरासूनोर्मुखाद्द्वारवतीकथाम् ।
प्रापुः परमसौजन्याः शुचं पञ्चापि पाण्डवाः ॥ ३५५ ॥
चित्तवृत्तिकृतावासं सम्यग्दर्शनमन्त्रिणा ।
यदि श्रावकधर्माभ्यामात्मजाभ्यां च राजितम् ॥ ३५६ ॥
चारित्रराजमासन्नासीनसंतोषसेवकम् ।
हत्वा शोकं विवेकोऽथ पाण्डवानामदर्शयत् ॥ ३५७ ॥
तत्र वीक्षितमात्रेऽपि तेऽन्वभूवन्परं सुखम् ।
विदांचक्रुश्च परमं तमेवात्मोपकारिणम् ॥ ३५८ ॥
अकालं सत्कृतास्तेषामत्यन्तमपकारिणः ।
प्रत्येकं प्रत्यभाषन्त मोहराजादयस्तदा ॥ ३५९ ॥
निर्वेदाख्यः सखाभ्येत्य सद्बोधसहितस्ततः ।
मोहादीनां पृथक्पार्थान्दोषजातमजिज्ञपत् ॥ ३६० ॥
अथ ते पाण्डुजन्मानश्चेतसोऽन्तरचिन्तयन् ।
अहितोऽपि हितो नूनं मोहो नः प्रत्यभादयम् ॥ ३६१ ॥

एतस्य ज्येष्ठपुत्रेण रागकेसरिणा श्रियः ।
असारा अपि नः साररूपत्वेन प्रदर्शिताः ॥ ३६२ ॥
नाम्ना द्वेषगजेन्द्रेण सुतेनास्य कनीयसा ।
वन्धुष्वपि वधारम्भमकार्यं कारिता वयम् ॥ ३६३ ॥
अन्योऽप्येतस्य संतानस्तामवाप सुखश्रियम् ।
सर्वदाभवदस्माकं कषायविषयादिकः ॥ ३६४ ॥
तस्मादेनं तिरस्कृत्य कुर्मो नेतारमात्मनः ।
तं चारित्रक्षमाधीशं साक्षीकृत्य जगत्प्रभुम् ॥ ३६५ ॥
किंतु न ज्ञायते देशो यं पुनीतेऽधुना प्रभुः ।
यद्वा जनान्मुमुक्षून्नः स्वयं सोऽनुग्रहीष्यति ॥ ३६६ ॥

साधीयोऽध्यवसायसंततिमयीमारूढवन्तो दृढं
निश्रेणिं स्पृहणीयवोधपटिमस्पष्टीभवद्दृष्टयः ।
तैस्तैरुत्कलिकाशतैः कवचितं चेतो वहन्तस्तदा
पन्थानं किल पाण्डवा जिनपतेरालोकयांचक्रिरे ॥ ३६७ ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये
द्रौपदीप्रत्याहरणद्वारकादाहकृष्णावसानवर्णनो नाम सप्तदशः सर्गः ॥१७॥

---

## अष्टादशः सर्गः ।

अथ नेमिजिनादेशाद्देशनाक्षीरसागरः ।
धर्मघोषमुनिः पाण्डुमथुरोद्यानमाययौ ॥ १ ॥
समागमं मुनेस्तस्य विदित्वोद्यानपालकात् ।
सहानुजैरजातारिर्मुदितो वन्दितुं ययौ ॥ २ ॥
अथाध्यासीनमुन्मीलदानन्दाश्रूदबिन्दुभिः ।
सुरासुरनराधीशमण्डलैर्मण्डितं सदः ॥ ३ ॥
निविष्टममरैः सृष्टे विकचे काञ्चनाम्बुजे ।
कर्तुं विश्वत्रयीं धर्ममयीमन्यं प्रजापतिम् ॥ ४ ॥

पञ्चशत्या महामात्यमुनीनां परिवारितम् ।
धर्मं साक्षादिवोदग्रैस्तपोदानादिभिर्वृतम् ॥ ५ ॥
रूपस्य तपसोऽप्येकमाश्रयं श्रेयसां निधिम् ।
अद्राक्षीत्प्रीतिफुल्लाक्षस्तं मुनिं मेदिनीपतिः ॥ ६ ॥
(चतुर्भिः कलापकम्)
भक्तिनिर्भरमानम्य तं ततो मुनिपुङ्गवम् ।
जराङ्गजन्मना सार्धं न्यविक्षत पतिः क्षितेः ॥ ७ ॥
मुनीन्द्रः सोऽथ पीयूषस्यन्दसोदरया गिरा ।
वैराग्यैकमयीं धर्मदेशनामुपचक्रमे ॥ ८ ॥
हा धिक्साक्षादसारत्वं संसारस्य विदन्नपि ।
मद्यान्मद्यपवत्तस्मान्नायं निर्विद्यते जनः ॥ ९ ॥
सुखाद्वैतमयाः कामं येऽप्यनुत्तरनाकिनः ।
तेषामपि यतो हन्त पर्यन्तविरसाः श्रियः ॥ १० ॥
कर्मस्तोमभुजिष्याणां मनुष्याणां तु का कथा ।
येषामायुः श्रियः सौख्यं योषिद्भ्रूभङ्गभङ्गुरम् ॥ ११ ॥
संपद्भिर्दोर्विलासैश्च येऽप्यहंकारिणोऽधिकम् ।
तेऽपि ह्यन्यस्य दृश्यन्ते भ्रूलतायत्तवृत्तयः ॥ १२ ॥
येऽपि दोर्विक्रमाक्रान्तभूचक्राश्चक्रवर्तिनः ।
जातुचित्तेऽपि वीक्ष्यन्ते हन्त दीनां दशां गताः ॥ १३ ॥
दुःखैकान्तमयं संपत्तारतम्यमयं च तत् ।
धीराः संत्यज्य संसारमुत्तिष्ठन्ते विमुक्तये ॥ १४ ॥
इति संवेगिनीं वाचमुच्चार्य विरते मुनौ ।
पाणिकुड्मलमामील्य जगाद जगतीपतिः ॥ १५ ॥
भवानेव प्रभो वेद कामं संसारमीदृशम् ।
गिरः प्रक्रमते वक्तुमीदृशीर्नेह्यनीदृशः ॥ १६ ॥
निश्चित्यानुभवैस्तैस्तैर्भवस्यानभिरामताम् ।
अस्माभिरपि वैराग्यात्प्रविव्रजिषुमानसैः ॥ १७ ॥

श्रीनेमिस्वामिनो ध्यातश्चिरादागमनोत्सवः ।
नूनं तेनापि विज्ञाय प्रेषितोऽसीह नः कृते ॥ १८ ॥ (युग्मम्)
तद्भवानपि नः साक्षात्तस्य मूर्तिर्जगत्पते ।
संसारसागरादस्मादुद्धरास्मांस्ततः प्रभो ॥ १९ ॥
किंत्वर्थोऽतीन्द्रियज्ञानशेवधीनां भवादृशाम् ।
न कोऽपि क्षेत्रकालाभ्यां दवीयानप्यगोचरः ॥ २० ॥
तद्वनेऽभूद्यथा मृत्युः शयालोर्वनमालिनः ।
जराङ्गजन्मनानेन तथा नः कथिताः स्वयम् ॥ २१ ॥
तत्कृते जलमाहर्तुं गतो भूतो हली तदा ।
तत्कथां श्रोतुमिच्छामः स्वामिन्नाख्यातुमर्हसि ॥ २२ ॥
अथेत्यव्याहतज्ञानो व्याजहार मुनीश्वरः ।
बलः सलिलमादाय केशवान्तिकमाययौ ॥ २३ ॥
जल्पति स च तं भ्रातरुत्तिष्ठोत्तिष्ठ सत्वरम् ।
स्फीतमस्तीदमानीतमम्भः सुरभि शीतलम् ॥ २४ ॥
तत्प्रक्षाल्य क्षणादास्यं कणेहत्य निपीय च ।
दूरकान्तारसंचारभूतिः श्रान्तिर्विनीयताम् ॥ २५ ॥
अव्याहरति कंसारौ सीरभृत्पुनरब्रवीत् ।
किमु रुष्टोऽस्यरिष्टारे कालक्षेपान्मनागपि ॥ २६ ॥
एष तेऽसांप्रतं रोषः सांप्रतं तु प्रसीद मे ।
देशे दवीयसि प्रासिर्वारिणोऽत्रापराध्यति ॥ २७ ॥
तथाप्यसिन्नजल्पाके सीरपाणिरचिन्तयत् ।
शयानोऽस्ति पथि श्रान्तः शेतां नामैष तन्मनाक् ॥ २८ ॥
इत्यालोच्य स्थितः कृष्णं परितः कृष्णमक्षिकाः ।
भ्रमन्तीर्वीक्ष्य संभ्रान्तः सोऽपि निन्येऽवगुण्ठनम् ॥ २९ ॥
ततोऽपश्यदपेतासुं कंसविध्वंसनं हली ।
शोणितैश्चोल्बणं भल्लिव्रणं चरणपल्लवे ॥ ३० ॥

कोपाटोपात्ततः सिंहनादमुच्चैश्चकार सः ।
येनारण्यमृगास्त्रेसुः कम्पते स च काश्यपी ॥ ३१ ॥
जगाद च मदाध्मातः पातकी ननु कोऽस्ति भोः ।
निद्राणमतुलप्राणं योऽवधीन्मम बान्धवम् ॥ ३२ ॥
सुप्तमत्तप्रमत्तेषु बालस्त्रीमुनिगोष्वपि ।
क्रूरकर्मैकचाण्डालोऽप्यभिज्ञः प्रहरेत कः ॥ ३३ ॥
दोर्दर्पोऽप्यस्ति चेत्कश्चित्तत्स्वमाविःकरोतु सः ।
भुजोष्मज्वरिणां बाहुः सर्वेषामेष भेषजम् ॥ ३४ ॥
इत्याद्यनेकशः कोपाद्गिरमुद्गीर्य लाङ्गली ।
तारं पूत्कारमुन्मुच्य मूर्छितः क्ष्मातलेऽपतत् ॥ ३५ ॥
क्षणाच्चैतन्यमासाद्य शीतैः कान्तारमारुतैः ।
रोदयञ्श्वापदान्काममाक्रन्दैर्विललाप सः ॥ ३६ ॥
हा विश्वेष्वेकशौण्डीर हा रिपुष्वेकरोषण ।
हा गुणिष्वेकधौरेय मा गुरुष्वेकवत्सल ॥ ३७ ॥
हा कंसध्वंस घोरांस हा कालानलनीरद ।
हा निःसन्धजरासन्ध हा रणक्रूरविक्रम ॥ ३८ ॥
हा लक्ष्मीकेलिपल्यङ्क हा निःशङ्कशिरोमणे ।
हा यशःकैरवाराम हा रामनयनोत्सव ॥ ३९ ॥
शस्त्राघातैर्द्विषां तैस्तैः श्रमोऽप्यासीन्न ते पुरा ।
संप्रत्यङ्घ्रिव्रणादस्मान्मृत्युः श्रद्धीयतां कथम् ॥ ४० ॥
तदुत्तिष्ठ द्रुतं भानुरारोहत्यन्तरम्बरम् ।
न खल्वत्यातपेऽल्पीयोऽप्यग्रतो गन्तुमीश्वहे ॥ ४१ ॥
चरणव्रणपीडाभिर्न चेच्चलितुमीशिषे ।
तदारोह मम स्कन्धं बन्धो किमसि मोहितः ॥ ४२ ॥
किमिति क्रन्दतोऽप्येवं वितरस्युत्तरं न मे ।
इमे हि श्रवसी पातुमुत्सुके ते वचोऽमृतम् ॥ ४३ ॥

रोषं मयि पुराकार्षीः सागस्यपि न जातुचित् ।
इदानीं तु विनाप्यागः केयं ते दीर्घरोपिता ॥ ४४ ॥
हा दैव यद्ययं नेतुं चिन्तितोऽभूद्दशामिमाम् ।
तत्त्वया किं कृतो विश्वमौलिलालितशासनः ॥ ४५ ॥
यद्वा ज्ञातं नितान्तं यं विडम्बयितुमीहसे ।
तस्य कन्दलयस्येवमतीव महतीः श्रियः ॥ ४६ ॥
एतैर्वा किमुपालम्भैर्भ्रातर्यावः पुरः क्वचित् ।
दैवाय प्रभविष्यावस्तत्रामुष्मै दुरात्मने ॥ ४७ ॥
निद्रासुखासिकालो वा गन्तुमुत्सहसे न चेत् ।
भ्रातस्तदद्य तिष्ठावः सच्छायेऽत्रैव कानने ॥ ४८ ॥
इत्यादि प्रलपन्नुच्चावचेन वचसा मुहुः ।
सीरभृत्तं दिनं तां च यामिनीमत्यवाहयत् ॥ ४९ ॥
प्रगे च वचनैस्तैस्तैरनुतिष्ठन्तमच्युतम् ।
जीवद्बुध्या निजस्कन्धमध्यारोप्य बलोऽचलत् ॥ ५० ॥
स्कन्धन्यस्तहरिर्बन्धुस्नेहव्यामोहितो हली ।
भ्राम्यति स्म सरिच्छैलकाननानि दिवानिशम् ॥ ५१ ॥
पुष्पैर्वन्यद्रुमाणां च नित्यमानर्च शार्ङ्गिणम् ।
एवं रामोऽतिचक्राम षण्मासान्पर्यटन् वने ॥ ५२ ॥
प्राप प्रावृडथाशान्तान्नीलयन्ती बलाहकैः ।
नूतनैरङ्कुरोद्गारैर्मेदिनीमण्डलं पुनः ॥ ५३ ॥
अथ ग्रावमयं शैलादुत्तीर्णं हेलया हली ।
स्यन्दनं कंचिदद्राक्षीत्समभूभागभङ्गुरम् ॥ ५४ ॥
संजयः सँजजल्पेऽथ सारथिः सीरपाणिना ।
रथेऽस्मिन्कणशो भग्ने कस्ते मूढ मुधा श्रमः ॥ ५५ ॥
सारथिस्तमथोवाच संगरेषु सहस्रशः ॥
निर्व्यूढोऽप्यधुना पादप्रहारेणापि यो मृतः ॥ ५६ ॥

सोऽयं चेद्विश्वजीवातू जीविता तव बान्धवः ।
खण्डशस्तद्गतोऽप्येष प्रगुणीभविता रथः ॥ ५७ ॥
क मे बन्धुर्मृतोऽस्तीति कामं सासूयमानसः ।
तं मुहुः कुटिलं पश्यन्नचालील्लाङ्गली पुरः ॥ ५८ ॥
रोपयन्तं निरूप्याथ शिलायां नलिनीं कचित् ।
सारम्भमभ्यधात्कंचिदुच्चैः शब्दं हसन्हली ॥ ५९ ॥
व्यामूढात्मन्किमेतस्मिन्नत्यन्तकठिनेऽश्मनि ।
सहस्रैरपि यत्नानां प्ररोहति सरोजिनी ॥ ६० ॥
सोऽप्यवादीत्तवायं चेत्प्राणिष्यति सहोदरः ।
पाषाणे तत्खरेऽप्यस्मिन्प्ररोक्ष्यत्यरविन्दिनी ॥ ६१ ॥
इत्येतस्यापि भारत्यामवज्ञाविवशाशयः ।
व्यक्तोत्प्रासस्मितस्मेरश्चचाल मुसली पुरः ॥ ६२ ॥
ततो दावाग्निनिर्दग्धं सिञ्चन्तमवनीरुहम् ।
कंचिदारामिकं रामः पश्यति स व्रजन्पुरः ॥ ६३ ॥
तं चाभ्यधाद्धिगेतां ते हन्त दुर्व्यवसायिताम् ।
मुञ्चन्ति जातुचिद्दग्धभूरुहोऽपि किमङ्कुरान् ॥ ६४ ॥
स जगाद यदि स्कन्धशवो वार्तयिता त्वया ।
शाद्वलीभविता भूयस्तदायमपि पादपः ॥ ६५ ॥
तामश्रुत्वेव तद्वाचमुच्चचाल हली पुरः ।
दूर्वाश्च गोशवास्येषु क्षिपन्तं कंचिदैक्षत ॥ ६६ ॥
तमप्यभिदधे गावः कथमेताः परासवः ।
दूर्वाः कवलयिष्यन्ति गताः कङ्कालशेषताम् ॥ ६७ ॥
तेनाप्यूचे बलः पद्भ्यां गन्ता चेदेष संस्थितः ।
चरितारस्तदा गावोऽप्यमूर्दूर्वाङ्कुरानिमान् ॥ ६८ ॥
रामोऽथाचिन्तयत्सत्यं किं मृतोऽयं ममानुजः ।
वदन्ति यदमी सर्वेऽप्येकरूपमिदं वचः ॥ ६९ ॥

यावदित्यासचैतन्यः किंचिच्चलति लाङ्गली ।
तावदुद्योतिताशान्तः कश्चिदस्थात् पुरः सरः ॥ ७० ॥
सोऽब्रवीत्सीरिणं सोऽहं सिद्धार्थः सारथिस्तव ।
प्रभावात्तपसस्तस्य देवभूयमुपागमम् ॥ ७१ ॥
स्मरस्येतत्परिव्रज्याकाले मामर्थयिष्यसे ।
यन्मामभ्युद्धरेर्जातु पतन्तं व्यसनार्णवे ॥ ७२ ॥
तत्त्वामिदानीमालोक्य मोहनिद्राविसंस्थुलम् ।
प्रबोधयितुमभ्यागां तां तवाभ्यर्थनां स्मरन् ॥ ७३ ॥
श्रीनेमिना पुरा मृत्युर्मुराराতेर्जरासुतात् ।
यदूचे तत्तथैवाभूदन्यथा नार्हतां गिरः ॥ ७४ ॥
एतान्यश्मरथादीनि वैकृतानि कियन्त्यपि ।
भ्रातर्मोहव्यपोहाय दर्शितानि मयैव ते ॥ ७५ ॥
विमुच्य तमिमं मोहं संदोहं दुःखसंपदाम् ।
आत्मनीनं महत्किंचित्कर्म निर्मीयतां त्वया ॥ ७६ ॥
बन्धवः खल्ववाप्यन्ते जीवैर्जन्मनि जन्मनि ।
किं तु ते मोहसैन्यैककेतवो भवहेतवः ॥ ७७ ॥
जीवाः सर्वे हहा बन्धुसंहतिस्नेहमोहिताः ।
दुःखप्लोषक्षमे कर्मण्युत्सहन्ते न जातुचित् ॥ ७८ ॥
बन्धुस्नेहोऽन्तरम्भोधिरेष्यतीनां सुखश्रियाम् ।
दुःखश्रेण्याश्च विश्रामधाम तद्विधुनीहि तम् ॥ ७९ ॥
इति सिद्धार्थदेवोक्तां गिरमाकर्ण्य लाङ्गली ।
जल्पति स त्वया बन्धो साधु साध्वस्मि बोधितः ॥ ८० ॥
किं तु मे कथय भ्रातर्भ्रातुरस्य मुरद्विषः ।
मृत्युनात्यन्तदुःखार्तः प्रवर्ते क्वात्मनो हिते ॥ ८१ ॥
देवोऽभ्यधान्ननु भ्रातस्त्रिलोकीकल्पपादपः ।
अस्त्येव भगवान्नेमिर्दुःखार्तानामरुंतुदः ॥ ८२ ॥

श्रेयःपीयूषवर्षैकप्रावृषं तत्पदान्तिके।
दीक्षामादाय शाश्वत्यामुद्यच्छस्व सुखश्रियम् ॥ ८३ ॥
तथेति प्रतिपेदानस्तद्गिरं सीरभृत्ततः।
तत्समेतो मुरारातेरग्निकर्मादि निर्ममे ॥ ८४ ॥
ततोऽसौ यावदत्यन्तं संयमोत्सुकमानसम्।
लाङ्गली तावदद्राक्षीद्विद्याधरमृषिं पुरः ॥ ८५ ॥
प्रत्युद्गम्य प्रणम्याथ रोहिणीतनयः क्षणात्।
पप्रच्छ स्वागतं हर्षबद्धोत्कर्षं महामुनिम् ॥ ८६ ॥
मुनिरप्यभ्यधाद्भद्र विश्वभद्रकरः प्रभुः।
श्रीमन्नेमिर्द्रुतं ज्ञातत्वन्मनाः प्रजिघाय माम् ॥ ८७ ॥
तत्कुरुष्व मनोऽभीष्टं पुष्टये पुण्यसंपदाम्।
कालोऽयमेव दुष्कर्मश्रेणिमर्मच्छिदे तव ॥ ८८ ॥
इत्युत्साहाग्रमानीतो नभश्चरमुनेर्गिरा।
प्रपेदे सर्वसावद्यविरतिं सीरभृत्क्षणात् ॥ ८९ ॥
जवाद्यतिरहस्यानां जज्ञे विज्ञश्च तत्क्षणात्।
भूयान्न खलु संस्कारो जात्यरत्नैरपेक्ष्यते ॥ ९० ॥
सांप्रतं च तपःकर्म कुर्वन्षष्ठाष्टमादिकम्।
तुल्यान्तःकरणाकारो लोष्टेऽप्यष्टापदेऽपि वा ॥ ९१ ॥
शमाद्वैतसुधाकुण्डस्नानशौण्डमनाः सदा।
तानप्यतिहि मन्वानो नाकिनः क्लेशपाकिनः ॥ ९२ ॥
वैरङ्गिकः शरीरेऽपि जीवितव्येऽप्यरागवान्।
अरिष्वपि निरातङ्को निःशङ्को विपिनेष्वपि ॥ ९३ ॥
धर्मामृतमयैः शान्तैस्तैस्तैर्वचनवीचिभिः।
तत्र तत्र जनांस्तांस्तानुपकुर्वन्नखर्वधीः ॥ ९४ ॥
अरण्यनगरग्रामकर्बटेषु समीरवत्।
स्वैरमप्रतिबद्धात्मा विहरस्येककुण्डलः ॥ ९५ ॥
(पञ्चभिः कुलक

तत्सपर्याभिरश्रान्तं कृतार्थंमन्यमानसः ।
सिद्धार्थदेवश्छायेव तस्याभ्यर्णचरोऽभवत् ॥ ९६ ॥
एकतो भगवान्नेमिरन्यतश्च स धीरधीः ।
मेदिनीमुपकुर्वाते सूर्याचन्द्रमसाविव ॥ ९७ ॥
तत्तयोर्बन्धवो मार्गमाश्रित्याशु तदाश्रितम् ।
निरीहमनसो यूयमप्येवं कर्तुमर्हथ ॥ ९८ ॥
एकैव सन्मणीनां हि लोकालंकारणं गतिः ।
ध्वान्तध्वंसादृते कृत्यं प्रदीपानां च नापरम् ॥ ९९ ॥
द्विषः क्षिप्ताः कृतं राज्यं भुक्तमप्रतिमं सुखम् ।
किंचिद्वस्तु न संसारे यदद्याप्यवशिष्यते ॥ १०० ॥
केवलं तत्सुखाद्वैतं मुक्तेर्भोक्तव्यमस्ति वः ।
तद्दातरि व्रते तस्मात्कालक्षेपो नहि क्षमः ॥ १०१ ॥
इत्युच्चैर्विहितोत्साहा धर्मघोषगुरोर्गिरा ।
संसारं झगिति त्यक्तुमैषिषुः पाण्डुसूनवः ॥ १०२ ॥
ते ततःसहसोत्थाय तमानम्य मुनीश्वरम् ।
उत्तरङ्गितसंवेगाः प्राविशन्नगरीं पुनः ॥ १०३ ॥
ते मुहूर्ते शुभे कृष्णप्रीतेरानृण्यमिच्छवः ।
चक्रुर्जराङ्गजन्मानं स्वराज्यस्याधिदैवतम् ॥ १०४ ॥
ते रुद्धान्यवरोद्धव्यैः कारागाराण्यशोधयन् ।
आत्मानं पुनराकीर्णं दुष्कर्मपरमाणुभिः ॥ १०५ ॥
दीनानां ते हिरण्याद्यैर्दौर्गत्यमुदमूलयन् ।
आत्मनस्तु बृहन्मूलं संसारविषशाखिनम् ॥ १०६ ॥
जीर्णभ्रष्टानि ते विश्वे चैत्यान्युदद्धुरर्हताम् ।
गम्भीरात्पुनरात्मानं दुर्गत्याख्यान्धकूपतः ॥ १०७ ॥
अमेयानि वमन्ति स्म सप्तक्षेत्र्यां धनानि ते ।
मुक्तिर्येषामशेषाणामेकमेवाभवत्फलम् ॥ १०८ ॥

किमन्यत्ते तथावर्षन्सर्वतः कनकोत्करैः ।
लुम्पन्ति स्म यथा नामाप्युत्तमर्णाधमर्णयोः ॥ १०९ ॥
कुञ्जरेन्द्रानथारूढाः सुरसिन्धुरबान्धवान् ।
तदात्वोचितमाणिक्यमौक्तिकाकल्पशालिनः ॥ ११० ॥
उद्धूतचामरैः साक्षादप्सरोनिकरैरिव ।
वृताः शृङ्गारसंभारसारैर्वाराङ्गनागणैः ॥ १११ ॥
सपौरैः सपरीवारैः सामन्तामात्यमन्त्रिभिः ।
अन्वीयमाना सखुरैरिव सामानिकामरैः ॥ ११२ ॥
लोकपाला इवाध्यक्षाः पञ्चाप्युद्दामदीप्तयः ।
कराग्रप्रेङ्खितै रत्नैः प्रीणयन्तोऽर्थिमण्डलम् ॥ ११३ ॥
तन्मार्गानुगमप्रौढतृष्णया कृष्णयान्विताः ।
ऊरीकर्तुं परिव्रज्यां प्रचेलुः पाण्डुसूनवः ॥ ११४ ॥
(पञ्चभिः कुलकम्

स नेत्राश्रुकणान् लाजकणान्पौरमृगीदृशाम् ।
पाण्डवेयाः प्रतीच्छन्तो बाह्योद्यानमुपाययुः ॥ ११५ ॥
तत्रोत्तीर्यगजेन्द्रेभ्यो राजचिन्हान्यपास्य ते ।
सपत्नीकाः प्रभुं धर्मघोषाख्यमुपतस्थिरे ॥ ११६ ॥
विज्ञा व्यज्ञापयन्नेनं ते निपत्य पदाम्बुजे ।
शिरो नः पावय स्वामिन्दीक्षादानात्स्वपाणिना ॥ ११७ ॥
भूत्वा भगवतो नेमेस्ततः सप्रतिहस्तकः ।
दक्षिणो दीक्षयामास मुनिः सप्रेयसीनमून् ॥ ११८ ॥
तदङ्गेषु तदा हर्षान्निर्गच्छत्पुलकच्छलात् ।
दृश्यन्ते स्म प्रणश्यन्ति कल्माषाणीव सर्वतः ॥ ११९ ॥
तेषां भावारघट्टोऽन्तर्वहति स्म तदा तथा ।
सिक्ताः पुण्यद्रुमाः कामं यथानन्दाश्रुकुल्यया ॥ १२० ॥
द्रौपद्यात्तव्रता तेषां पञ्चानामनुगा बभौ ।
महाव्रतानां मूर्तानामिव मूर्तिमती क्रिया ॥ १२१ ॥

तान्प्रणम्य ततः सर्वः पौरामात्यादिकोजनः ।
मन्दं मन्दं प्रयाति स्म श्रेयःसंभारनिर्भरः ॥ १२२ ॥
तेऽप्यभ्यासे गुरोस्तं तमभ्यस्यन्तः क्रियाक्रमम् ।
निरीहाः स्वशरीरेऽपि व्यहरन्नन्यतोऽन्यतः ॥ १२३ ॥
अथोन्मीलन्मनोभावपरिचारकलालिताः ।
नित्यं प्रथमपीयूषपानपीयूषशालिनः ॥ १२४ ॥
वाचमिन्द्रियखिङ्गानामश्रृण्वन्तो मनागपि ।
त्यजन्तो दूरतः काममालस्यादीनसूयकान् ॥ १२५ ॥
आननेन्दुमपश्यन्तो जातु निद्रामृगीदृशः ।
क्रमेण द्वादशाङ्ग्यान्ते समभूवन्नधीतिनः ॥ १२६ ॥
(त्रिभिर्विशेषकम्)

इत्यासश्रुतसंस्कारा दधुर्गीतार्थताममी ।
रसेऽथ संस्कृता लोहधातवो हेमतामिव ॥ १२७ ॥
याज्ञसेन्यप्युपासीना प्रवर्तिन्याः पदाम्बुजम् ।
तपोज्ञानविवेकानां परां कोटिमशिश्रियत् ॥ १२८ ॥
ततः कदाप्यनुज्ञाप्य धर्मघोषमुनीश्वरम् ।
ते पृथग्विहरन्ति स्म हरन्तो विश्वकल्मषम् ॥ १२९ ॥
तप्यन्ते स्म तपस्तेऽभिग्रहोदग्रं पृथक्पृथक् ।
येन स्वं पवितुं शङ्के साप्यैच्छन्मुक्तिकामिनी ॥ १३० ॥
संभाव्य सुभटं शत्रुजित्वरं निजमात्मजम् ।
मोहदुर्विषहोत्साहः श्रीमान्धर्मः किमप्यभूत् ॥ १३१ ॥
धर्मसूतेः सदा शान्तिहिमानीमहिमोदयः ।
जगत्यपि महामोहग्रीष्मारम्भं वृथाकरोत् ॥ १३२ ॥
धावन्तो विद्विषः स्वान्तःपुरमादातुमन्तरा ।
के नामज्जंस्तपःसूनोः प्रशान्तिपरिखाम्भसि ॥ १३३ ॥
भीमस्याभूद्यथा सत्त्वं दुर्लङ्घमरिभिः पुरा ।
संप्रत्यपि तथैवासीदान्तरैः परिपन्थिभिः ॥ १३४ ॥

यथा यथारिषड्वर्गनिग्रहेऽभूदरुंतुदः।
तथा तथा दधौ चित्रं भीमः कायमभीषणम्॥ १३५॥
भीमोऽन्तर्विद्विषः क्षान्तिगदयादलयत्तथा।
यथा नामापि नाश्रौषीदेष तेषां पुनः क्वचित्॥ १३६॥
अर्जुनस्य मुनेर्जीयात्तपो गाण्डीवताण्डवम्।
येन जैनगवीवर्गः सूत्रितो निरुपद्रवः॥ १३७॥
विधाय समताराधावेधं प्रशमपत्रिणा।
पार्थः पाणौ करोति स्म परमानन्दसंपदम्॥ १३८॥
ध्यानवैश्वानरः पार्थमुनेरजनि कोऽप्यसौ।
यस्य क्रोधाग्निरेवाभूदिन्धनं प्रज्वलिष्यतः॥ १३९॥
नकुलस्य तपोऽम्भोधेर्निर्गतं यच्छमामृतम्।
प्रीयन्ते स्म सुरास्तेन तत्किं नामात्र कौतुकम्॥ १४०॥
मन्ये मुनिषु सर्वेषु सहदेवोऽधिदैवतम्।
तपस्तरणिना यस्य ज्ञानेन्दुरुपजीवितः॥ १४१॥
जीयते स्म पुरा पाण्डुसूनुभिर्द्विषतां शतम्।
तत्तदा जेतुमीषेऽष्टाचत्वारिंशं तु कर्मणाम्॥ १४२॥
ततो भीममुनिर्भीममित्यभिग्रहमग्रहीत्।
कुन्ताग्रदत्तमेवोञ्छमादास्ये नान्यथा पुनः॥ १४३॥
तस्य पुण्यात्मनः सोऽपि मासैः षड्भिरपूर्यत।
न किंचिदतिदुर्लम्भं सत्त्वनिर्णिक्तचेतसाम्॥ १४४॥
प्रतिस्थानं प्रतिग्रामं प्रत्यध्व प्रतिकाननम्।
जनं धर्ममयैस्तैस्तैर्वचोभिरुपकुर्वताम्॥ १४५॥
एवं तेषां तपस्तत्तन्महाभिग्रहदुस्तरम्।
कुर्वतां खर्वतां नित्यं नयतां कर्मसंहतिम्॥ १४६॥
स्वदेहेऽपि निरीहाणामविरामविहारिणाम्।
हायनान्यतिभूयांसि व्यतीयुः पाण्डुजन्मनाम्॥ १४७॥
(त्रिभिर्विशेषकम्)

अथ नित्यविहारेण विहरन्तोऽवनीतले ।
कदाचिदपि ते जग्मुस्तुङ्गं शैलान्तिकक्षितिम् ॥ १४८ ॥
धर्मघोषगुरुं तस्य शैलस्योपत्यकावने ।
ते जनादागतं श्रुत्वा वन्दितुं मुदिता ययुः ॥ १४९ ॥
अद्राक्षुश्च गुरुं द्राक्षापाकपेशलया गिरा ।
दिशन्तं विशदं धर्मं तिर्यङ्मर्त्यदिवौकसाम् ॥ १५० ॥
दूरादालोक्य तान्सोऽपि गुरुः प्रीतितरङ्गितः ।
प्रत्युद्याति स्म विस्मेरः संभ्रमादुज्झितासनः ॥ १५१ ॥
आनन्दाश्रुकणाकीर्णपक्ष्माणो रोमहर्षिणः ।
ते पदाम्भोरुहक्षिप्तमौलयस्तं ववन्दिरे ॥ १५२ ॥
तानुत्थाप्य करे धृत्वा प्रीतिगद्गदया गिरा ।
विकस्वरकपोलाक्षः पप्रच्छ स्वागतं गुरुः ॥ १५३ ॥
पुनरासनमासीने गुरौ तेऽभ्यर्णभूतले ।
वन्दिताः परिषद्देवनृतिर्यग्भिरुपाविशन् ॥ १५४ ॥
पुण्यार्जनकृते सर्वसदस्यानां विशेषतः ।
तत्तपःप्रौढिमुद्दिश्य वितेने देशनां विभुः ॥ १५५ ॥
देशनान्तेऽखिलश्रेयःसंभारात्मंभरिर्जनः ।
प्रणम्य तं विभुं तांश्च ययौ स्थानं निजं निजम् ॥ १५६ ॥
विस्मेरमनसोऽत्यन्तमथैते गुरुमभ्यधुः ।
करिष्यन्ते पराः सर्वाः वार्ताः पश्चादपि प्रभो ॥ १५७ ॥
कथ्यतां तावदेतन्नो यदारण्याः शरीरिणः ।
क्रूरा अप्यत्र दृश्यन्ते शमसंवेगशालिनः ॥ १५८ ॥
तद्यौष्माकागमस्यैवानुभावोऽयं किमद्भुतः ।
किं चात्र किंचिदप्यस्य जृम्भते कारणान्तरम् ॥ १५९ ॥
ततोऽभाषिष्ट भगवान्पुरग्रामादिषु क्रमात् ।
विहरन्नप्यगात्पूर्वं शैलेऽस्मिन्सुशली मुनिः ॥ १६० ॥

उपास्यमानः सिद्धार्थदेवेनाद्भुतभक्तिना।
मासक्षपणमातेने सानुन्यस्य स धीरधीः॥ १६१॥
पर्यन्ते तपसोऽमुष्य स पाराणकहेतवे।
पुरे कस्मिंश्चिदासन्ने विवेश वशितेन्द्रियः॥ १६२॥
विशन्स्वरूपलावण्यपुण्यमूर्तिः कयाप्यसौ।
कूपकण्ठस्थया दृष्टः समीपस्थार्पिताभेया॥ १६३॥
रूपाक्षिप्ता गले बद्ध्वा रज्जुं कुम्भधियाऽथ सा।
कूपे प्रक्षेप्तुमारेभे तं बालं वलितानना॥ १६४॥
तद्विलोक्य मुनिर्वेगादागत्य प्रतिबोध्य ताम्।
निन्दन्व्यामोहिनीरूपसंपदं स्वां न्यवर्तत॥ १६५॥
जग्राहाभिग्रहं चेति वने काष्ठादिहारिभिः।
दत्तेनान्नादिनावश्यं पारयिष्यामि नान्यथा॥ १६६॥
ततः प्रभृति तेनैव विधिना कृतपारणः।
तप्यमानस्तपोऽत्युग्रं सोऽथ तत्रैव कानने॥ १६७॥
तमनैदंयुगीनाङ्गाभोगमुद्दामतेजसम्।
ते विलोक्य तपस्यन्तं तृणकाष्ठादिहारिणः॥ १६८॥
गत्वा स्वस्वनरेन्द्रेभ्यः शशंसुरतिविस्मिताः।
अधृष्यश्रीर्वने कश्चित्तपस्यति पुमानिति॥ १६९॥ (युग्मम्)
भीतान्तःकरणास्तेऽपि भूभुजस्तुच्छचेतसः।
स्वतुल्यकलिताशेषजगतोऽन्तरचिन्तयन्॥ १७०॥
नूनमन्यूनमाहात्म्यतपःपल्लवितोर्जितः।
कोऽप्यसावस्मदीयानि राज्यान्याच्छेत्तुमिच्छति॥ १७१॥
तत्संप्रत्येव तं हन्म इत्यालोच्य महीभुजः।
सर्वे सर्वाभिसारेण तं जगित्यभ्यषेणयन्॥ १७२॥
ततः पादातिकाश्वीयरथ्यहास्तिकशालिनः।
अभ्येत्यास्मिन्वने यावत्ते रामं परितः स्थिताः॥ १७३॥

तावत्सिद्धार्थदेवेन नित्यं रामोपसेविना ।
सिंहाः फालक्रियोत्ताला विकीर्यन्ते स्म कोटिशः ॥ १७४ ॥
तैश्च वित्रासिताशेषसैनिकास्तेऽवनीभुजः ।
तत्क्षणक्षुभितस्वान्ता न्यवर्तन्त प्रणम्य तम् ॥ १७५ ॥
तदा प्रभृति निःसीमशमैकनिरतेरपि ।
रामस्य भुवने नाम नृसिंह इव पप्रथे ॥ १७६ ॥
पश्यतोऽथ शमं तस्य शीतांशुपरिभाविनम् ।
लक्षयन्तोऽपरिक्षामां भूतग्रामे दयार्द्रताम् ॥ १७७ ॥
विन्दानाः समपिण्याकहिरण्यां च निरीहताम् ।
शृण्वानाश्च गिरं धर्ममयीममृतजित्वरीम् ॥ १७८ ॥
क्रूरा अप्युज्झितक्रौर्याः शमैकमयचेतसः ।
सर्वेऽप्यत्र वने वन्याः प्रत्यबुध्यन्त जन्तवः ॥ १७९ ॥
(त्रिभिर्विशेषकम्)

सम्यक्त्वं जगृहुः केचित्ते देशविरतिं परे ।
अन्ये च भद्रकीभूय पापकर्माणि तत्यजुः ॥ १८० ॥
चक्रिरेऽनशनं केचित्कायोत्सर्गं व्यधुः परे ।
शिष्या इवान्ये रामर्षेरासन्नासन्नसेविनः ॥ १८१ ॥
कश्चित्तु प्राग्भवप्रीतिभावाज्जातिस्मरो मृगः ।
कल्याणभक्तिरश्रान्तमुपासामास तं मुनिम् ॥ १८२ ॥
भ्रान्त्वा भ्रान्त्वा च सोऽजस्रं सार्थमावासितं वने ।
गृहीतान्नांश्च काष्ठादिहारकानगवेषयत् ॥ १८३ ॥
यदा नैक्षिष्ट तान् क्वापि तदैवागत्य सत्वरम् ।
संकेतैः प्रणिपाताद्यैः स रामर्षिमजिज्ञपत् ॥ १८४ ॥
पारयित्वा ततो ध्यानं रामस्तस्यानुरोधतः ।
तद्दर्शितपथो भैक्ष्यं सार्थादिभ्योऽग्रहीत्तदा ॥ १८५ ॥
हर्म्याद्यर्माणि साराणि काष्ठान्याहर्तुमन्यदा ।
रथकारास्तदाभ्येयुर्भूयांसः काननोदरम् ॥ १८६ ॥

भ्राम्यन्नेणः स तान्वीक्ष्य मांसक्षपणपारणम्।
विधातुमनसो राममुनयेऽज्ञापय द्रुतम् ॥ १८७ ॥
तेनाग्रगामिना सोऽपि निराकाङ्क्षमना मुनिः।
ईर्ष्याचतुरचक्षुस्तानुत्ससर्प वनच्छिदः ॥ १८८ ॥
छेदं छेदं वनं सारान् तेऽपि मध्यंदिने तदा।
नानारसवतीपाकाः समगच्छन्त मुक्तये ॥ १८९ ॥
धर्मं साक्षादिवायान्तं दूरादालोक्य तं मुनिम्।
सानन्दो रथकाराणामग्रणीरित्यचिन्तयत् ॥ १९० ॥
धवादिशाखिनामेव स्थानेऽस्मिन्विपिने कथम्।
कल्पद्रवोऽपि दृश्यन्ते भाग्यं नस्तदहो महत् ॥ १९१ ॥
ऐहिकश्रीफलाः कामं तेऽपि कल्पद्रवोऽथवा।
एते तु मुनयः स्वर्गापवर्गकमलाफलाः ॥ १९२ ॥
तदद्य खलु धन्योऽस्मि तुल्यमद्यैव जन्म मे।
जातं सफलमद्यैव वनागमनमप्यदः ॥ १९३ ॥
इत्यादि चिन्तयन्नन्तरुन्मीलत्पुलकाङ्कुरः।
अभ्युच्छ्राय स भून्यस्तमौलिस्तं मुनिमानमत् ॥ १९४ ॥
प्रासुकैरेषणीयैश्च तैस्तैरानन्दितेन्द्रियैः।
पीनप्रीतिः सपानान्नैरुपतस्थे बलं मुनिम् ॥ १९५ ॥
तन्मनोवृत्तिमालोक्य श्रद्धातिशयबन्धुराम्।
रौहिणेयमुनिश्चित्ते चिन्तयामासिवानिति ॥ १९६ ॥
अहो महात्मनोऽमुष्य भावः कोऽप्येष निस्तुषः।
एवमानन्दवैक्लव्यमिदानीं यद्दधात्यसौ ॥ १९७ ॥
तनोति कृतिनां भाग्यं भावस्तात्कालिकोऽपि यत्।
मूलादुन्मूल्यते तेषां तेनैव भवभूरुहः ॥ १९८ ॥
तन्महात्मायमारूढस्तस्मिन्भावेऽथ संप्रति।
यस्मिन्करप्रदेयानि मन्ये मुक्तिसुखान्यपि ॥ १९९ ॥

ततोऽङ्गाधारमात्रीयप्रान्ताहारेच्छुरप्यहम् ।
न भावस्खलनं किंचित्करिष्येऽस्य विवेकिनः ॥ २०० ॥
ततो राममुनिर्भैक्ष्यमादातुमुपचक्रमे ।
दातुं च रथकृद्वर्गग्रामणीर्मुदिताशयः ॥ २०१ ॥
तावुभावपि संवीक्ष्य दातृपात्रशिरोमणी ।
सकुरङ्गोऽपि संवेगभावनामित्यभावयत् ॥ २०२ ॥
अहो धन्योऽयमेवाद्य ग्रामणीर्विपिनच्छिदाम् ।
यस्य प्रादुरभूत्पुण्यप्राग्भारोऽयमचिन्तितः ॥ २०३ ॥
मुनिभ्यो दत्तमीदृग्भ्योऽन्यदापि शिवसंपदे ।
किं पुनस्तद्यदेतस्मिन्मासक्षपणपारणे ॥ २०४ ॥
अहं तु न तपः किंचित्कर्तुमल्पमपि क्षमः ।
छिद्यन्ते कर्मणां मर्मग्रन्थयो येन तत्क्षणात् ॥ २०५ ॥
न चैतादृग्विधं किंचिद्दानं दातुमपीश्वरः ।
हा हतोऽहमिदं जन्म धिङ्मे तिर्यक्त्वपांसुरम् ॥ २०६ ॥
इत्यमीषां परां कोटिमीयुषां भावसंपदः ।
उपरिष्टात्पपातार्द्धच्छिन्नो वात्याहतस्तरुः ॥ २०७ ॥
तन्निपाताभिघातेन ते त्रयोऽपि गतासवः ।
कल्पे ब्रह्माभिधेऽभूवन्नमरास्तुल्यसंपदः ॥ २०८ ॥
तिर्यङ्नरामरानित्थं प्रतिस्थानं प्रबोधयन् ।
बभार व्रतपर्यायं सीरभृद्वत्सरान् शतम् ॥ २०९ ॥
तत्प्रभृत्यनुभावेन मुनेर्लाङ्गललक्ष्मणः ।
इदं शान्ताखिलक्रूरश्वापदं समभूद्वनम् ॥ २१० ॥
इत्याकर्ण्य कथां तस्य धर्मघोषमुनेर्मुखात् ।
विषादकलुषात्मानः पाण्डवेया बभाषिरे ॥ २११ ॥
ईदृगद्वैतचारित्रपवित्रात्मा बलो मुनिः ।
हा धिगस्माभिरत्यन्तं भाग्यवन्ध्यैर्न वन्दितः ॥ २१२ ॥

श्रोत्रपात्रीकृता यस्य वार्तापीयमनुत्तरा।
निषिञ्चत्यन्तरात्मानमश्रान्तममृतैरिव ॥ २१३ ॥
विश्वभद्रंकरः स स्याद्यदि साक्षादवेक्षितः।
श्रेयःसंवलितानन्दमयं नस्तज्जगद्भवेत् ॥ २१४ ॥ (युग्मम्)
तन्नैवाभूदभाग्यैर्नस्तावत्संप्रति तु प्रभोः।
श्रीनेमिस्वामिपादारविन्दं वन्दामहे यदि ॥ २१५ ॥
तद्भवत्येव नः सर्वपाप्मभ्यः सलिलाञ्जलिः।
बिभर्ति कृतकृत्यत्वं व्रतग्रहणमप्यदः ॥ २१६ ॥ (युग्मम्)
किंतु त्रिजगदम्भोजस्मेरणद्युमणिः प्रभुः।
क्काधुना विहरत्येवं विद्मः किमपि नो वयम् ॥ २१७ ॥
इत्युक्ते सूनुभिः पाण्डोर्धर्मघोषमुनीश्वरः।
जनालोकमहेनाह्वा साक्षात्कृतजगज्जगौ ॥ २१८ ॥
आर्यानार्येषु देशेषु मध्यदेशादिषु क्रमात्।
विहृत्य ह्रीमदाद्येषु भूधरेष्वप्यनेकशः ॥ २१९ ॥
मार्तण्ड इव राजीवखण्डान्निशि निमीलितान्।
मोहव्यामोहितांस्तांस्तान्प्राणिनः प्रतिबोध्य च ॥ २२० ॥
ज्ञात्वा नेदीयसीमात्मनिर्वृतिं भुवनप्रभुः।
गिरिं रैवतकं नाम नन्वलंकुरुतेऽधुना ॥ २२१ ॥
(त्रिभिर्विशेषकम्)

इत्यस्य गिरमाकर्ण्य विक्लवोत्सुकचेतसः।
स्वामिसंगमसोत्कण्ठा जजल्पुः पाण्डुसूनवः ॥ २२२ ॥
ननु त्वरितमद्यैव तर्हि प्रस्थीयतां प्रभो।
दर्श्यतां नः पुरोभूय पादास्तस्य जगत्पतेः ॥ २२३ ॥
मा स्म निर्भाग्यधौरेयाः पुरस्तादेव तं विभुम्।
निर्वाणपदवीं प्राप्तं····वन्दिष्यामहे वयम् ॥ २२४ ॥
पुरस्कृत्येति तं वेगान्मुनिं रैवतकं प्रति।
श्रीमन्नेमिजिनं नन्तुं पाण्डवेयाः प्रतस्थिरे ॥ २२५ ॥

अविश्रान्तं व्रजन्तस्ते दर्शनोत्कण्ठिताः प्रभोः ।
हस्तिकल्पं पुरं जग्मुर्मासक्षपणपारणे ॥ २२६ ॥
नगरेऽस्मिन्विशन्तस्ते धर्मघोषमुनीश्वरम् ।
व्यज्ञापयन्निति प्रीत्या निपत्याङ्घ्रिसरोरुहे ॥ २२७ ॥
प्रभो रैवतकोऽमुष्मात्पुराद्द्वादशयोजनी ।
प्रगेतनप्रयाणेन तत्र प्रायो गमिष्यते ॥ २२८ ॥
तद्दृष्टे विटपाधीशे पारणाविधिरस्तु नः ।
इत्यभिग्रहमातेनुस्ते तरङ्गितसंमदाः ॥ २२९ ॥
प्रविश्याथ पुरे तस्मिन्नुज्जयन्तगिरेर्यथा ।
जनानागच्छतो वीक्ष्य श्यामीभूतास्यपङ्कजान् ॥ २३० ॥
क्षणं यावदमी तस्थुः किंचिच्चकितचेतसः ।
चारणः श्रमणः कश्चित्तावदागाद्विहायसा ॥ २३१ ॥
परिम्लानमुखो धर्मघोषाय विहितानतिः ।
प्रणम्य पाण्डवैः पृष्टः स व्याचष्टेति शिष्टधीः ॥ २३२ ॥
सन्नकर्मारिरासन्नं ज्ञात्वा निर्वाणमात्मनः ।
भगवान्समवासार्षीदेत्य रैवतकाचले ॥ २३३ ॥
रूप्यकाञ्चनमाणिक्यमयं वप्रत्रयाङ्कितम् ।
नानामणिप्रभाजालं केलिभिर्लुसगोपुरम् ॥ २३४ ॥
सर्वतो रत्नभित्त्यन्तःसंक्रान्तप्रतिमाच्छलात् ।
एकाशोकमपि व्याप्तमशोकविपिनैरिव ॥ २३५ ॥
आनन्दानामुपादानं निदानं पुण्यसंपदाम् ।
सुरा विरचयांचक्रुर्देशनागारमन्तिमम् ॥ २३६ ॥
(त्रिभिर्विशेषकम्)
विकुर्वन्ति स्म गीर्वाणाः ककुप्सु चतसृष्वपि ।
तस्यान्तर्भूरिमाणिक्यभासुरां चतुरासनीम् ॥ २३७ ॥
ततोऽस्मिन्नुल्लसद्धर्मध्वजमञ्जरिताङ्गणे ।
राकाहिमकराकार····जैत्रत्रयोल्बणे ॥ २३८ ॥

यथास्थानं समासीनसुरासुरनरेश्वरे ।
सिंहासनमलंकृत्य कृत्यवित्पूर्वदिङ्मुखम् ॥ २३९ ॥
मोक्षं प्रति प्रतिष्ठासुर्विश्वानुग्रहकाम्यया ।
चिरं चकार भगवानन्तिमां धर्मदेशनाम् ॥ २४० ॥
प्रतिबुद्धास्तया केचिद्व्रतमाददिरे क्षणात् ।
श्रावकत्वं परे भेजुरन्ये भद्रकतां पुनः ॥ २४१ ॥
ततः परीतः साधूनां षट्त्रिंशैः पञ्चभिः शतैः ।
पादपोपगमं चक्रे मासिकानशनं विभुः ॥ २४२ ॥
ततः शुचिसिताष्टम्यां चित्रायां चित्रिताशयैः ।
संगतः परितः शक्रप्रमुखैस्त्रिजगज्जनैः ॥ २४३ ॥
साधुभिः सहितः शुद्धशैलेशीध्यानबन्धुरः ।
आशु लम्भितवान्सर्वं कर्मजातं निरंशताम् ॥ २४४ ॥
साग्रमब्दसहस्रायुर्जगदेकदिवाकरः ।
निर्व्याबाधसुखं स्वामी निर्वाणपदवीं ययौ ॥ २४५ ॥
ततः कुमाराः प्रद्युम्नसाम्बाद्याः सत्त्वशालिनः ।
रथनेम्यादयः स्वामिभ्रातरश्च तरस्विनः ॥ २४६ ॥
कृष्णस्याष्टौ महिष्यश्च तथैव मुनयोऽपरे ।
साध्व्यश्च राजीमत्याद्या भूयस्यः शिवमासदन् ॥ २४७ ॥
प्रभोर्माता शिवादेवी समुद्रविजयः पिता ।
सहैव सर्वैर्दाशार्हैर्देवभूयमुपाययुः ॥ २४८ ॥ (युग्मम्)
कुबेरः शिबिकां शक्रशासनाद्व्याकरोत्क्षणात् ।
हरिर्विधिवदभ्यर्च्य न्यधात्तस्यां वपुः प्रभोः ॥ २४९ ॥
गोशीर्षचन्दनाद्यैश्च काष्ठै रत्नशिलातले ।
वितेनुर्दिशि नैर्ऋत्यां त्रिविष्टपसदश्चिताम् ॥ २५० ॥
उत्पाद्य शिबिकां तत्र नीत्वा तस्यां विभोर्वपुः ।
स्वयं तस्याग्निसंस्कारं वासवोऽकारयत्सुरैः ॥ २५१ ॥

निर्वापिते चिताग्नौ च मेघैः क्षीरोदवारिभिः ।
देवैर्भूपैर्जनैश्चान्यैरस्थ्यादि जगृहे प्रभोः ॥ २५२ ॥
तस्मिंश्च वह्निसंस्कारपूतरत्नशिलातले ।
सूत्रमासूत्रयामास श्रीनेमिजिनमन्दिरम् ॥ २५३ ॥
आनम्यानम्य तत्रस्थां स्वामिनः प्रतिमां ततः ।
साश्रुः सुरनरेशादिः स्वं स्वं स्थानं ययौ जनः ॥ २५४ ॥
विद्याधरमुनेर्वाचमित्युपश्रुत्य दुःश्रवाम् ।
दशां दुःखमयीं कांचित्पाण्डवेयाः प्रपेदिरे ॥ २५५ ॥
जल्पन्ति स्म च भाग्यं नः सर्वथा प्रातिलोमिकम् ।
यन्न सीरभृता नापि स्वामिना संगमोऽभवत् ॥ २५६ ॥
त एव जगति स्तुत्यास्ते त्रिलोकीविशेषकाः ।
धन्या माता तदीयैव तज्जन्मैव फलेग्रहि ॥ २५७ ॥
येषां दीक्षोत्सवः स्वामिपाणिना पावितोऽभवत् ।
अविश्रान्तं पिबन्ति स्म स्वामिवागमृतं च ये ॥ २५८ ॥

(युग्मम्)

धन्येष्वपि हि धन्यास्ते ते च श्लाघ्यतमाः सताम् ।
स्वामिनैव समं येषां निर्वाणमहिमाप्यभूत् ॥ २५९ ॥
इयतापि कृतार्थत्वं यद्व्रतं समपादि नः ।
चेत्तु प्रसुरपीक्ष्येत तत्स्यात्तस्यापि मञ्जरी ॥ २६० ॥
प्रभोर्वागमृतैश्चेन्न सिच्येतायं तपस्तरुः ।
ततो वाङ्मनसातीतं किमप्येष फलं ध्रुवम् ॥ २६१ ॥
किं पुनर्भाग्यशून्यानां फलन्ति न मनोरथाः ।
न जातु स्याद्दरिद्रस्य कल्पद्रुमसमागमः ॥ २६२ ॥
तत्तावज्जगृहेऽस्माभिर्दुस्तरोऽयमभिग्रहः ।
यद्व्रतं पारयिष्याम दृष्टे स्वामिनि नान्यथा ॥ २६३ ॥

तत्तमेव पुरस्कृत्य प्रत्यासन्ने नगोत्तमे ।
आरुह्य विमलाख्येऽस्मिन्कुर्महे निजमीप्सितम् ॥ २६४ ॥
अत्र हि क्षीणनिःशेषकर्मसंततयः पुरा ।
मुनयः पुण्डरीकाद्याः कोटिशः प्रययुः शिवम् ॥ २६५ ॥
तदयं सर्वतीर्थेषु महत्तीर्थं गिरीश्वरः ।
अस्माकमप्यभीष्टार्थसिद्धये भविताधुना ॥ २६६ ॥
इत्यालोच्य तमद्रीन्द्रमारोहन्पाण्डवाः क्षणात् ।
दुःसाध्येऽपि न साध्येऽर्थे मन्दायन्ते महाशयाः ॥ २६७ ॥
गिरेः शिरसि ते तस्य विधायाराधनाविधिम् ।
धर्मघोषगुरोः पार्श्वे चक्रिरेऽनशनक्रियाम् ॥ २६८ ॥

अथेक्षमाणा भृशमात्मतुल्यान् जगत्यशेषानपि देहभाजः ।
साम्यामृताम्भोनिधिमज्जनैकप्रशान्तमन्तःकरणं वहन्तः ॥ २६९ ॥
मतिं सितध्यानसमाधिबन्धप्रबन्धमैत्रीमधुरां दधानाः ।
निश्रेणिकल्पां शिवमन्दिरस्य श्रेणिं श्रयन्तः क्षपकाभिधानाम् ॥ २७० ॥
सर्वक्रियाकौशलशालिचेतसां निर्यास्यमाणा गुरुणैव तेन ते ।
आसादयामासुरसादितौजसः क्रमात्त्रिलोकीकृतकेलिकेवलम् ॥ २७१ ॥

धर्मं विशुद्धमुपदिश्य ततः सदैव
मर्त्यासुरे सदसि योगजुषो मुहूर्तम् ।
पाण्डोः सुताः क्षणमयोगिगुणास्पदे ते
विश्रम्य मुक्तिपदमक्षयसौख्यमीयुः ॥ २७२ ॥

तत्पदागमनकाम्यविक्रमा निर्मलानशनकर्मपाविनी ।
नन्दिनी द्रुपदभूभुजोऽपि सा ब्रह्मलोकमतुलश्रियं ययौ ॥ २७३ ॥

हुताशे संस्कारं त्रिदशतरुदारुप्रणयिभि-
स्तदङ्गानां तत्तद्विधिमधुरमाधाय विबुधाः ।
जगत्काम्ये तस्मिन्गिरिशिरसि निर्वाणमहिमा-
महं चक्रुर्नृत्यत्सुरयुवतिसंगीतकमयम् ॥ २७४ ॥

इत्येतत्किल पाण्डवेयचरितं पर्याप्तमेतस्य तु
ब्रूमः किं महिमानमन्वहमपि व्यातन्महेऽस्मै नमः ।
यस्यैकक्रमलङ्घितान्यचरितारण्यापि विद्वद्गवी
..........श्राम्यतीव पादपतपरार्श्वीमानमालम्ब्रिते ॥ २७५ ॥

एतस्य स्तुतये कुतूहलतया जिह्वान्तयोगासना-
न्यध्यास्ते कविमण्डलस्य नियतं देवी गिरामीश्वरी ।
कुण्ठीयन्ति कनीयसापि कवितुं येऽन्ये प्रबन्धान्मुहुः
तेऽप्यस्मिन् किमपि प्रगल्भवचसो वाचस्पतीयन्ति यत् ॥२७६॥

एतस्मिन् व्यवहारकौशलमिह व्युत्पत्तयः प्रश्रय-
प्रायेषु प्रसभं गुणेषु दधते वैदग्ध्यमस्माद्गिरः ।
अस्मिन् संवननं प्रपञ्चपटिमा कीर्तेरुदात्तक्रम-
त्रैलोक्याभयदानपीनमहिमा धर्मोऽप्यमुष्मिन् परः ॥ २७७ ॥

एकस्यापि महात्मनोऽस्ति चरितं यस्मिंस्तदप्यास्पदं
कल्याणस्य न कस्य यत्पुनरलंचक्रुस्त एतेऽद्भुताः ।
श्रीनेमिर्मुशली हरिप्रतिहरी पाण्डोः सुताः कौरवा
भीष्मः कर्णकृपादयश्च बहवस्तस्यास्य किं ब्रूमहे ॥ २७८ ॥

किंत्वस्मिन्नियमस्ति दोषकणिका वक्ता यदस्मादृशः
सन्तः सच्चरितामृतैकरसिकास्तस्यामनास्थापराः ।
सौरभ्यस्पृहयावतंसपदवीं पङ्केरुहं लम्भयन्
पङ्कोत्पत्तिकलङ्कमस्य मतिमान् को नाम मीमांसते ॥ २७९ ॥

षष्ठाङ्गोपनिषत्त्रिषष्टिचरिताद्यालोक्य कौतूहला-
देव(त)त्कन्दलयाचकार चरितं पाण्डोः सुतानामहम् ।
तत्राज्ञानतमस्तिरस्कृतिवशादुत्सूत्रमुत्सूत्रयं
यत्किंचित्किल मय्यनुग्रहधिया शोध्यं तदेतद्बुधैः ॥ २८० ॥

---

१. 'भासूत्रयं' भवेत्.

यावत्संसारतापव्यतिकरभिदुरा वाग् जिनानां मुनीन्द्र-
प्रज्ञाकान्तावगाढा विधुरयति सुधादीर्घिकादर्पमुद्राम् ।
तावन्निर्निद्रकार्तस्वरकमलकलां पुष्पदश्रान्तमस्यां
विश्वं विद्वद्भिरेफार्पितमहिममहाकाव्यमेतद्धिनोतु ॥ २८१ ॥

इति मलधारिश्रीदेवप्रभसूरिविरचिते पाण्डवचरिते महाकाव्ये बलदेवस्वर्गगम-
श्रीनेमिनाथपाण्डवनिर्वाणवर्णनो नामाष्टादशः सर्गः ॥

